अखिलभारतीय—प्राच्यविद्यासम्मेलनम्

शतवर्षमहोत्सवग्रन्थमाला—३४

# प्राच्यपाश्चात्यरचनाप्रभेदाः

डॉ. काटमल्ली लीना चंद्रा

प्रधानसंपादकः

आचार्यः श्रीनिवासः वरखेडी

कुलगुरु

संपादकः

आचार्यः मधुसूदनः पेन्ना

संचालकः संशोधन—प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु—कालिदास—संस्कृत—विश्वविद्यालयः

रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

तथा

न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला– 34

# प्राच्यपाश्चात्यरचनाप्रभेदाः

डॉ. काटमल्ली लीना चंद्रा

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं
न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

| | | |
|---|---|---|
| शीर्षकम् | – | प्राच्यपाश्चात्यरचनाप्रभेदाः |
| लेखिका | – | डॉ. काटमल्ली लीना चंद्रा |
| प्रधानसंपादकः | – | आचार्यः श्रीनिवासः वरखेडी<br>कुलगुरु, क.का.सं.वि., रामटेकम् |
| संपादकः | – | आचार्यः मधुसूदनः पेन्ना<br>संचालकः संशोधन–प्रकाशनविभागः<br>क.का.सं.वि., रामटेकम् |
| संपादकमण्डलम् | – | डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक<br>डॉ. वीना गाणु, नागपुर. |
| प्रकाशनवर्षम् | – | २०२० |
| आवृत्तिः | – | प्रथमा |
| मूल्यम् | – | **225.00** |
| आय.एस.बी.एन. | – | 9788183154123 |
| मुखपृष्ठम् | – | श्री. उमेश पाटील, क.का.सं.वि., रामटेकम् |
| प्रकाशकः | – | कुलसचिवः,<br>कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,<br>प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.<br>एवं<br>न्यू भारतीय बुक कॉरपोरेशन<br>२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,<br>४७३५/२२, अंसारी रोड, दरिया गंज,<br>नई दिल्ली – ११०००२<br>फोन नं. : २३२८०२१४, २३२८०२०९ |



एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU

**Kavikulaguru Kalidas Sanskrit University**
**All India Oriental Conference**

**100th Year 50th Session**
**10th-12th January, 2020**

**Chief Patron**
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

**Patron**
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

**AIOC President**
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

**AIOC General Secretary**
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

**AIOC Local Secretary**
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

**Additional Local Secretary**
Dr. Harekrishna Agasti
Dr. Dinakar Marathe
Dr. Kalapini Agasti
Dr. Parag Joshi

**Organising Committee**
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek
Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

# विषयानुक्रमणिका

## उपोद्घातः



## प्रथमः प्रकाशः –

**द्वितीयः प्रकाशः –**

# उपोद्घातः

## संस्कृतभाषास्वरूपम्

किं नाम संस्कृतमिति जिज्ञासितं चेत् संस्कारितं, परिष्कृतं, परिशुद्धं, व्याकरणादिदोषरहितं यत् तत् संस्कृतम् इति वक्तुं शक्यते । प्राचीनैः ऋषिभिर्मुनिभिश्च भाषागतदोषपरिष्कारेण, अपशब्दादिदोषवारणेन या परिष्कृता भाषा व्यवहृतिमानीता सा एव संस्कृतभाषा नाम्ना आद्रियते। **विद्वांसो हि देवाः विद्वज्जनव्यवहृता चेयं भाषा**। सा एव देवभाषा, देववाणी, गीर्वाणवाणी, गीर्वाणगीरित्यादिभि-र्नामधेयैर्व्यवह्रियते। इयमेव भाषा विकृतिमापन्ना प्राकृतभाषापदमुपगतवती। सेयं भाषा भारतीयानां प्राणरूपिणी, जीवनोन्नायिका, सत्पथप्रदर्शिनी, आचारविचार-प्रवर्तिनी, कर्तव्याकर्तव्यबोधिनी, लोकद्वयहितसम्पादिनी च भवति।

भारतवर्षस्य समस्तमपि प्राचीनं वाङ्मयं संस्कृतभाषामाश्रित्यैवावतिष्ठते । निखिलमपि वैदिकं वाङ्मयं, रामायणं, महाभारतं, पुराणानि, स्मृतिग्रन्थाः, दर्शनानि, धर्मग्रन्थाः,काव्यानि, महाकाव्यानि, नाटकानि, गद्यकाव्यानि, गीतिकाव्यानि, आख्यानसाहित्यम्, नीतिग्रन्थादयश्च संस्कृतभाषायामेवोपलभ्यन्ते । न केवलमेतदेव अपि तु व्याकरणं, काव्यशास्त्रं, गणितं, ज्योतिषम्, आचारशास्त्रं, काव्यशास्त्रम्, आयुर्वेदः, धनुर्वेदः, वास्तुकलाशास्त्रम्, अर्थशास्त्रम्, राजनीतिशास्त्रम्, ऐतिह्यम्, छन्दःशास्त्रम्, कोशग्रन्थाश्च संस्कृतभाषायाः गौरवमभिवर्धयन्ते। ज्ञानस्य विज्ञानस्य न तादृशं किमप्यङ्गं यन्नैवोपलभ्यते संस्कृतभाषायाम्। प्राचीनानाम् ऋषीणां, महर्षीणां, कवीनां, तत्त्वज्ञानामनारतश्रमस्यैव फलमेतद् यदीदृशं विपुलं संस्कृतवाङ्मयं दृष्टिपथमुपयाति। प्राचीनभारतीयसाहित्यानुशीलनेन स्फुटमेतदवगम्यते यद् ईसवीय-संवत्सरात् पूर्वं गीर्वाणगीरियं जनसाधारणे व्यवहृताऽभूत्। तादृशं संस्कृतवाङ्मयं द्विधा विभक्तम् –

**१) वैदिकवाङ्मयम्  २) लौकिकवाङ्मयञ्चे**ति।

वेदब्राह्मणारण्यकोपनिषदः सूत्र–पुराण–धर्मशास्त्र–वेदाङ्गादीनि च साक्षात् वेदसम्बद्धत्वात् वैदिकवाङ्मयमिति, आर्षकोटिप्रविष्टे महाभारतरामायणकाव्ये, कालिदासादिकविभिः प्रणीतानि काव्यानि लौकिकवाङ्मयमिति च अभिधीयन्ते।

**संस्कृतसाहित्यस्वरूपम्**

अतिमहत्त्वपूर्वम्, अतिव्यापकं, प्राचीनतायां सर्वातिशायि भवति संस्कृत–साहित्यम्। साहित्यं नाम सकलसुखसाम्राज्यसाधनं, निरवधिकदुःखराहित्यनिधानम्, अलौकिकानन्दकारणम्, कल्पलताकल्पं, किमप्यपूर्वमेव वस्तु वरीवर्ति।

**हितेन सह वर्तते इति साहित्यम्। सहितस्य भावः साहित्यम्।** तदध्येतॄणां तदुपासकानां तदवलम्बिनाञ्च अभिलाषापूर्तिरेव हितं, तदवाप्तिश्च तत्तद् ग्रन्थानामध्ययनेनानुभूयत एव। साहित्ये भोगमोक्षफलप्रदाः सर्वविधाः ग्रन्थाः उपलभ्यन्ते। अतः सर्वविधविषयाणां समुच्चयेन हितजनकत्वादिदं साहित्यं नाम बिभर्ति।

सर्वेष्वेव विषयेषु तत्तद्विषयाणां प्राधान्यं, किन्तु काव्यादिग्रन्थेषु तु व्याकरणं, छन्दः, ज्योतिषं, दर्शनानि, राजनीतिः, पुराणेतिहासादयः सर्वेऽपि विषयाः विलसन्तीति न तिरोहितं तद्विदाम्। अत एव सहितत्वात्साहित्यमित्यपि तन्नाम सार्थकमेव। इदमेव च साहित्यमेकमात्रं मानवसभ्यता–संस्कृति–स्वाधीन–तादीनां विकासस्य साधनम्। अनेनैव राष्ट्रे समाजे जातौ व्यक्तौ च नवीनं जरीजृम्भ्यमाणं विराजमानं विलसति। अत्रैव देशसमाजादीनामुत्कर्षापकर्षयोः सामाजिकरीतिनीतीनां जातीयविचारव्यवहाराणाञ्च दर्शनं जायते। अत एव साहित्यं देश–जाति–समाजानां दर्पणमित्यभिधीयते धीमद्भिः।

समालोचनाविधा साहित्यशास्त्राभिधानेन अपि प्रथिता बभूव। शास्त्रीय–रूपेण प्रथमं तावद् राजशेखरः एनां साहित्यविद्यां प्रोवाच। तदनन्तरं रुय्यकविश्वनाथौ साहित्याभिधानं लोकप्रियं कृतवन्तौ। रुय्यकः स्वग्रन्थाय साहित्यमीमांसा इति नाम दत्तवान्। विश्वनाथश्च साहित्यदर्पणमिति स्वग्रन्थनामकरणमकरोत्। उभयोरपि एतन्नामाङ्गीकरणेन साहित्यशास्त्रमित्यभिधानं व्यापकं लोकप्रियञ्च सञ्जातम्।

काव्यजगति साहित्यपदप्रयोगो नार्वाचीनः। अपि तु अतिप्राचीनैव। वस्तुतः साहित्यपदप्रयोगो न केवलं काव्येभ्यो बभूव, अपि तु सकलं वाङ्मयमेतत्

अन्तर्गतमासीत्। **साहित्यमुरारे**रिति पदप्रयोगं कृत्वा स्वगुरुं मुकुलभट्टं प्रशंसन् प्रतिहारेन्दुराजसकलविधवाङ्मयस्य मीमांसातर्कव्याकरणकाव्यादीनां नैपुण्यम-भिव्यानञ्च।

यद्यपि सम्प्रति साहित्यशब्दो वाङ्मयमित्यर्थे उपयुज्यते परन्तु, संस्कृतभाषायां साहित्यशब्दस्य इयं व्युत्पत्तिः। तथा हि – सहितं रसेन युक्तं विशिष्टं, तस्य भावः साहित्यम्। अथवा हितेन निरतिशयप्रेमास्पदेन इतरेच्छानधीनेच्छा विषयेण रसेन सहितमुभयत्र व्यञ्जकत्वप्रतिपादकत्वाऽन्यतरसम्बन्धेन विशिष्टं तस्य भावः। व्याकरणशास्त्रे साहित्यपदनिष्पत्तिः एवं वर्तते – सहितस्य भावः साहित्यम्। आलङ्कारिकाः साहित्यं तदेव, यत्र शब्दार्थौ सहितौ भवतः। हितं पिहितमावृतं तत् सहितम्। सहितयोः शब्दार्थयोः भावः साहित्यम् इति वदन्ति।

शास्त्रं नाम शासनकरणम्। शासनं च अनधिगतार्थज्ञापनं ज्ञान-विषयत्वाभाववदर्थबोधनम्। स्वानुपजीविनी प्रमाणानि न्यायवेदान्तप्रभृतीनि तत्प्रयोज्यज्ञानविषयता द्रव्यगुणादिषु ब्रह्ममायादिषु च, तत् सामान्याभाववन्तः सकलपुरुषार्थसाधनानि च रसादयः। तद्विषयकज्ञानसाधनत्वं साहित्यस्य, विशेषतश्च, ध्वन्यालोकस्य प्रमाणान्तरेण अनधिगतध्वनिस्वरूपप्रतिपादकत्वात् शास्त्रत्व-मसन्दिग्धमेव।

अस्यैव साहित्यशास्त्रस्य अलङ्कारशास्त्रं, काव्यशास्त्रमित्यपरं नाम। प्रागलङ्कारकाव्यादिशास्त्रनाम्ना यत् व्यवहृतं कालेऽस्मिन् सौन्दर्यशास्त्रनाम्ना व्यवह्रियते, यतः पुरा काव्यजीवनतयाऽलङ्कारा एव मन्यन्ते स्म। सौन्दर्यशास्त्र-स्वरूपनिरूपणप्रसङ्ग एव तत् विभावादिरूपतया नायिकानायकानां भेदा अपि प्राप्तनिरूपणा भवन्ति, तेन तदप्यस्य सौन्दर्यशास्त्रस्य अङ्गभावं भजते।

काव्यसमालोचनाविधायिनी विद्या प्रथमं तावत् अलङ्कारशास्त्रनाम्ना विद्वद्भिरभिहिता। प्राचीनाचार्याः भामहोद्भटवामनरुद्रटादयो मनीषिणः स्वरचित-काव्यशास्त्रीयग्रन्थानां नाम्नि स्वालङ्कारपदप्रयोगं कृतवन्तः। भामहस्य काव्यालङ्कारः, उद्भटस्य अलङ्कारसारसङ्ग्रहः, वामनस्य काव्यालङ्कारसूत्रम्, रुद्रटस्य काव्या-लङ्कारश्च उदाहरणानि।

काव्यसमालोचनायाः प्रारम्भिककाले काव्यस्य प्रमुखं सौन्दर्यादायकं तत्त्वमलङ्कार एव सम्मतं विद्वद्भिः। बहवः प्राचीनाचार्याः काव्येषु अलङ्काराणां महत्त्वं प्रतिपादितवन्तः। अत एव ते स्वग्रन्थानां नामकरणे अलङ्कारपदप्रयोगं कृतवन्तः। सर्वेषामपि तेषामाचार्याणां मते सौन्दर्यादायकं तत्त्वमलङ्कार एव वर्तते। यथा वामनेन प्रोक्तमलङ्कारादेव काव्यं ग्राह्यं भवति। सम्भवतः काव्यसमालोचनायै प्राचीनसमये काव्यालङ्कारपदस्य प्रयोगः प्रचलितोऽवर्तत। परमुत्तरवर्तिनी समये अलङ्कारशास्त्रपदप्रयोगः प्रचलितो बभूव। यद्यपि काव्यसमालोचनायां रसगुण-दोषवृत्यलङ्कारादीनां सर्वेषामेव तत्त्वानां निवेशो विद्यन्ते, तथाऽपि तत्र अलङ्काराणामेव प्राधान्यभावादियं विद्या अलङ्कारशास्त्राभिधानेन प्रथिता बभूव।

द्वितीयं भवति काव्यशास्त्रम्। साहित्यस्य विविधविधासु काव्यविधा कवेरान्तरिकभावानां संवेगानाञ्च बौद्धिकविकासजन्या प्रस्फुटिता अभिव्यक्तिरेव। काव्यरचनायै हृदयगतभावानां प्रस्फुटनं, विषयगतसामग्रीणामुपस्थितिः, भावाभि-व्यञ्जनसमर्थता, परिष्कृता भाषा इत्यादीनां सर्वेषां तत्त्वानामेकत्र स्थितिः अनिवार्या विद्यते। एकस्यापि तत्त्वस्य अभावः काव्यरचनार्थमवरोधको वर्तते।

वैदिकयुगादेव काव्यानां विकासः आरब्धः। परन्तु भरतपूर्वकालीनो ग्रन्थो न कोऽपि काव्यशास्त्रविषयको लभ्यते। काव्यानां शास्त्रीयस्वरूपनिरूपकग्रन्थः प्राचीनतमः भरतप्रणीतं नाट्यशास्त्रमेव समुपलभ्यते।

**संस्कृतकाव्यस्वरूपम्**

काव्यं नाम किमित्यत्र एवं विचार्यते – **काव्यं किञ्चिद्वस्तु** इति। तत्र दर्शनरीत्या च काव्यस्य सद्भावे ईषत् विचार्यते। सप्तसु पदार्थेषु कः पदार्थः इति। काव्यमभावात्मकस्तु पदार्थो न, तस्य भावपदार्थत्वात्। काव्यं न समवायः। अयुतसिद्धपदार्थानां समवायो भवति। काव्यं नायुतसिद्धिः पदार्थः। काव्यं न विशेषः, यः कल्पनाया अन्ते अवसाने भवति तथा परमाणवाकाशादिषु नित्यपदार्थेषु वर्तते स विशेषः। तत्रेदं काव्यं परमाणवाकाशादिषु नित्यपदार्थेषु गणितं न, परं तेषां वर्ण्यत्वात् कल्पनायाः आरम्भे मध्येऽन्ते च भवनात् तथा न। काव्यं न सामान्यं यद्धि नित्यं सत् अनेकेषु समवायसम्बन्धेन वृत्तिमन्नास्ति। ततो न सामान्यरूपम्।

काव्यं न नैयायिकोक्तं कर्म। नैयायिकाः कर्मनिरूपणविषये दरिद्रा वा स्तनन्ध्या वा अज्ञानिन इति यावत्। अत एव कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि यानि लोके शास्त्रे च व्यवह्रियमाणानि सन्ति, तानि नय्यायिकाः न मन्वन्ते उप-स्थादिभिर्व्यवहरन्तोऽपि। तेषां मते भ्रमणरेचनस्य चन्दनोर्ध्वज्वलनतिर्यग्गमनाना गमनेऽन्तर्भावात् उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि इति पञ्चैव कर्माणि सन्ति।

परमालङ्कारिकाणां मते सहृदयसमवेतरसभावगुणीभूतव्यङ्ग्यगुणा-लङ्कारादोषरीतीनाम् उत्कर्षबोधोपयिकशब्दार्थयोरिदं प्रथमतया प्रकाशनाख्यं **कवेः कर्म काव्यमि**ति सिद्धान्तात् काव्यं कर्माख्यः पदार्थः। अत एव तादृशशब्दार्थयोरिदं प्रथमतया प्रकाशकस्य कविरित्यभिधाऽभवत्।

सूरिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसम्मिश्रः **शब्दात्मा काव्यमि**ति ध्वन्यालोके प्रथमे उद्योते उक्तम्। **अर्थप्रतिपादकः शब्दः काव्यमि**ति तल्लक्षणम्। गन्धवद्द्रव्यं पृथिवीतिवत्। तत्राऽसाधारणधर्मो हि लक्षणमित्युक्ते काव्यं कवित्वं शब्दः। तेन नैयायिकानां मते शब्दस्य गुणत्वात् असाधारणधर्मशब्दरूपं तद्गुणोऽपि। वैयाकरणानां मीमांसकानामालङ्कारिकाणां च मते शब्दस्य द्रव्यत्वात् काव्यं द्रव्यम्। अथ च **शब्दार्थौ काव्यमि**ति भामहाद्युक्तलक्षणेनापि शब्दार्थयोर्द्रव्यत्वात् काव्यं द्रव्यम्।

काव्यात् कस्य निवृत्तिः? काव्यात् उपश्लोक्यस्तुतिरूपात् स्तोत्रं कस्य न तुष्टये इति संसिद्धिकव्यवहारेण स्तुत्यप्रसादात् शिवेतरस्यानर्थस्य पापस्य तत्फलस्य दुःखस्य दारिद्रस्य आन्ध्यस्य कुष्ठादेः, तज्जनकस्य दुर्व्यसनस्य, दुगाचरणस्य दुःसङ्गतेः, दुर्व्यवहारस्य, दुर्ज्ञानस्य, दुःसहदुर्यशसः, दौर्मनस्यस्य, दुःशकुनस्य, दुःस्वप्नादेश्च निवृत्तिः, क्षतिः विनाशो भवति। स्तुत्यायाः देवताया प्रसादोऽथ च तेन शिवेतरनिवृत्तिश्च प्रयोजनान्तर्गत एवेति प्राचामाचार्याणामभिप्रायः।

कवेः कर्म काव्यमुच्यते। संसारस्यास्य रचयिता अपि कविः। यथा चोक्तम् - **कविर्मनीषी परिभूः स्वयम्भूः।** किन्तु अर्थेऽस्मिन् काव्यशब्दप्रयोगो न प्रशस्यतरः। अपम्परा अपि नममर्थयति तथ्यमिदम्। प्रख्यातो कोषकारो अमरसिंहः काव्यं कविं च पर्यायरूपेण लिखति - **शुक्रो दैत्यगुरुः काव्य उशना भार्गवः**

**कविः।** परन्तु विवेच्य काव्यशब्दः कविशब्दपर्यायात् भिन्नः। कथयति च लोकः काव्यं पठामि, लिखामि, श्रुणोमि, विवेचयामि, समालोचयामीत्यादि। न हि सम्भवा समालोचना विवेचना कविपर्यायभूतस्य काव्यशब्दस्य। अत एव निरूपणीयाऽस्य व्युत्पत्तिः परम्परा च।

ननु कोऽयं कविर्यस्य कर्म काव्यमुच्यते इति जिज्ञासायां वैजयन्तिकोषो वदति – **प्राज्ञः काव्यकृतौ कविः** इति, यास्केन – **कविः क्रान्तदर्शी मननशीलदूरद्रष्टा** च स्वीकृतः। काव्यस्य निर्माणे कवेः सर्जनात्मककल्पना महत्त्वपूर्णं कार्यं सम्पादयति। कवेः कृतिः काव्यम्। कवि इति शब्दः कुङ् धातोः तथा कु + इञ् (अत इञ्) प्रत्ययेन निष्पन्नः। शब्दकल्पद्रुमानुसारेण चेत् **येन सर्वो विषयः ज्ञायते, वर्णनं कर्तुं शक्यते वा सः कवि** इत्युच्यते। किन्तु वाल्मीकेः समयतः एवं रूपेण उक्तं प्रतिभासम्पन्नम् अलौकिकरचनाकारः विद्वांस इति। मुकुटादिकोषकारैश्च– कवृ (वर्णने) धातुना निष्पादितः कविशब्दः। शब्दोऽयं वान्तो बान्तश्च। सामान्यतया अनेन शब्देन क्रान्तदर्शनं कृत्वा वस्तुवर्णनरतो विद्वान् व्यज्यते। कवेः कृते क्रान्तदर्शनं तद्वर्णनमुभयमस्त्यावश्यकं यथा स्वीकरोति भट्टतौतः –

**दर्शनात् वर्णनाच्चार्थरूढा लोके कविश्रुतिः।**<br>
**तथा हि दर्शनस्वच्छे नित्येऽप्यादिकवेर्मुनेः॥**<br>
**नोदिता कविता लोके यावज्जाता न वर्णना॥**

कविशब्दः पुरा काले ब्राह्मणः सर्वनियन्तृवाचकः आसीत्। स एव कालक्रमेण पद्यगद्यादिलेखकार्थे प्रयुक्तो दृश्यते। सम्प्रति तस्मिन्नेवार्थे रूढः। ईदृग्विधस्यैव कवेः कर्म काव्यमुच्यते। दृश्यश्रव्यत्वभेदेन द्विविधमपि काव्यमुच्यते। साहित्यपदस्य रचना शब्दार्थयोर्व्यासज्यभावेन सञ्जाता। शब्दश्चाऽर्थश्च सहितावेव काव्यपदं निर्धारयतः। साहित्यपदस्य निर्वचनं विद्यते – **सहितयोः शब्दार्थयोर्भावः साहित्यम्।** साहित्यशब्दमेव – **सहितशब्दात् भावे ष्यञि कृते निष्पद्यते।** अर्थात् हितेन सह सहितं, सहितस्य भावं साहित्यम्। हितं द्विविधं लौकिकं पारलौकिकञ्च। अथवा इष्टापूर्तिरनिष्टनिवारणं च। अनयोः सोपपत्तिर्विवेचनं यत्र तत् साहित्यं काव्यं वा इति फलितार्थः।

## आङ्ग्लभाषास्वरूपम्

आधुनिकप्रपञ्चे आङ्ग्लभाषायाः अतिप्राधान्यं विद्यते। तच्च प्राधान्यं दिने दिने वर्धते च। आधुनिकेऽस्मिन् युगे आङ्ग्लभाषा न केवलं ग्रन्थालयभाषारूपेण, अपि तु आवश्यकतायाः भाषारूपेण च प्रसिद्धा। (Language of Oppertunity & Library language)

जनामोदपद्धत्यनुसारेण आङ्ग्लभाषाचरित्रं त्रिधा विभक्तम् –

**१) प्राचीनाङ्ग्लभाषा** (Old English)

**२) मध्यकालीनाङ्ग्लभाषा** (Middle English)

**३) आधुनिकाङ्ग्लभाषा** (Modern English) इति।

**१. प्राचीनाङ्ग्लभाषा** (Old English, 450-1100 A.D.)

जर्मनिदेशात् बहवः जनाः ब्रिटन् देशं प्रति बलात्कारेण प्रेषिताः। तत्र तैः भाषिता भाषा पुरातनाङ्ग्लभाषा इत्युच्यते। एषा भाषा आधुनिकाङ्ग्लभाषातः भिन्ना आसीत्। सामान्याङ्ग्लभाषाजनेभ्यः अवगन्तुमेषा भाषा बहुक्लिष्टा आसीत्। परमाधुनिकााङ्ग्लभाषायां विद्यमानाः बहवः शब्दाः पुरातनाङ्ग्लादेव उद्धृताः। इयं भाषा ११०० संवत्सरपर्यन्तं प्रचुरप्रचारे आसीत्।

**२. मध्यकालीनाङ्ग्लभाषा** (Middle English, 1100-1500 A.d.)

इयं मध्यकालीन आङ्ग्लभाषा ११ शताब्दादारभ्य १५ शताब्दपर्यन्तं प्रयोगे आसीत् इति चरित्रकाराणामभिप्रायः। अस्मिन्नेव काले आङ्ग्लभाषायाः उपरि फ्रेञ्च् (French), लाटिन् (Latin) भाषयोः प्रभावः अधिकमासीत्। तदानीमेव अस्यां भाषायां बहूनि परिवर्तनानि सञ्जातानि इति चरित्रकाराः विश्वसन्ति।

१०६६ तमे वर्षे विलियम् दि कोण्करर् (William the Conquerar) इति नार्मण्डी (Normandy) राजा इग्लाण्डदेशमक्रमयत्। तेनसाकमागता फ्रेञ्च् भाषा राजभाषारूपेण आगता। (Language of the Royal Cowd) धनिकाः फ्रेञ्च् भाषायां,

दरिद्राः आङ्ग्लभाषायां च भाषन्ते स्म। परं १४ शताब्दौ पुनः आङ्ग्लभाषा एव व्यवहारे आगता। तथा बहवः फ्रेञ्चभाषासम्बन्धशब्दाः आङ्ग्ले समागताः।

**३. आधुनिकाङ्ग्लभाषा** (Modern English)

सौकर्यार्थमयं कालः द्विषु भागेषु विभक्तः। **अ) पूर्वाधुनिकाङ्ग्लम्** (Early Modern English) **आ) उत्तराधुनिकाङ्ग्लम्** (Later Modern English)

**अ) पूर्वाधुनिकाङ्ग्लम्** (Early Modern English, 1500-1800 A.D.)

मध्यकालीनाङ्ग्लानन्तरम् आङ्ग्लभाषा अकस्मात् विपरीततया परिवर्तिता। मुख्यतया उच्चारणे परिवर्तनानि जातानि। अस्य एव परिवर्तनस्य दि ग्रेट् वोवल् षिफ्ट् (The Great Vowel Shift) इति व्यवहारः। १६ शताब्दावेव आङ्ग्लेयानां सम्बन्धः प्रपञ्चे बहुभिः देशैः साकं वर्धितः इति चरित्रकाराः वदन्ति। अस्मिन्नेव समये विविधभाषातः आङ्ग्ले बहुपदानि आगतानि इति अपि ते वदन्ति।

**आ) उत्तराधुनिकाङ्ग्लम्** (Late Modern English, 1800 A.D. - Present)

अस्मिन् काले मुख्यतया आङ्ग्लभाषायां पदसम्पदा विस्तृतया वर्धिता। अस्य मुख्यकारणं भवति पारिश्रामिकविप्लवम् (Industrial Revolution), तथा साङ्केतिकविप्लवं च (Technological Revolution)।

**पाश्चात्यसाहित्यस्वरूपम्**

साहित्यमेकं सामान्यपदम्। तच्च एका लेखनप्रतिभा भवति, या वारं वारं पठितुं सर्वान् प्रोत्साहयति। अतः एतत् वक्तुं शक्यते यत् साहित्यम् एका लेखनप्रक्रिया। साहित्यमिति पदं विस्तृतया उपयोक्तुं शक्यते इति केचन वैद्यसाहित्यम् (Medical Literature) तथा मार्किस्ट्साहित्यम् (Marcist Literature) इति च वदन्ति। परं सामान्यव्यवहारे साहित्यशब्दप्रयोगः बहवः साहित्यकाः नाङ्गीकुर्वन्ति। यतोहि साहित्यं **प्रतिभामूल्ययुक्तं** भवेत्।

साहित्यं केवलं भावाभिव्यक्तिः न भवेत् परं सृजनात्मकता अपि भवेत् यतोहि साहित्यद्वारा भावसंतृप्तिर्भवेत् इति तेषामभिप्रायः। अर्थात् साहित्यं पाठकान् रञ्जयेत्। पाठकानां भावोद्वेगानां मेधसः च स्पर्शनं भवेत् साहित्येन इति

साहित्यकाराणामभिप्रायः। तच्च कथमिति प्रश्ने सति अत्र उदाहरणरूपेण विलियम् वर्डस्वर्त्महोदयेन लिखितं लण्डन् नगरवर्णनयुक्तं "सोणट् कम्पोसड् अप् आन् वेस्टमिन्स्टर् ब्रिड्ज्" इति सोणट् दर्शयति।

Earth hodh not anything to show more fair;
Dull would he be of soul who could pass by.
A sight to touching in its majesty;
This city now doth, like a garment, wear
The beauty of the morning; silent, bard,
Ships, towers, domes, theaters and temples lie
Open unto the fields, and to the sky;
All bright and glittering in the smokeless air.
Never did sun more beautiful steep
In his first splendor, valley, rock, or hill;
Ne'er saw I, never felt, a calm so deep!
The river glideth at his own sweet will;
Dear God! The very houses seem a sleep;
And all that mighty heart is lying still!

एतच्च सोणट् सहृदयहृदयानाह्लादयति। सहृदयानलौकिकप्रपञ्चे नेतुम्, तेभ्यः अलौकिकानन्दं प्रदातुं च अत्र कविना एतादृशानां पदानां चयनं कृतं, तथा च चितानां पदानां समुचितरूपेण निवेशनं च कृतम्।

**पाश्चात्यकाव्यस्वरूपम्**

साहित्यप्रक्रियासु अतिमुख्यं भवति काव्यम्। साहित्यप्रपञ्चे अस्य विशेषप्राधान्यं विद्यते। अनया प्रक्रियया पाठकान् अति सुलभतया आकर्षयितुं शक्यते। काव्यपठनेन कवेः विचारविकारान् समानहृदयेन अवगन्तुं शक्नुवन्ति पाठकाः। अत एव पाठकान् सहृदयाः अर्थात् कविसमानहृदयाः इति आह्वयन्ति।

अत्र काव्यं नाम किमिति प्रश्ने पृष्टे सति कविकर्म काव्यम् इति वदन्ति पण्डिताः। कविः कः? इति जिज्ञासायां कवेः दृष्टिपथस्य, एकस्य शास्त्रज्ञस्य दृष्टि-पथस्य च भेदः अवगन्तव्यः। शास्त्रं भौतिकविषयाय प्राधान्यं ददाति। अतः शास्त्रज्ञाः

प्राप्तान् भौतिकविषयान् क्रोडीकृत्य एकं फलं कथयन्ति। तेभ्यः तदेव सत्यम्। फलकथने स्वतन्त्रभावाः, ऊहाः न भवेयुः। तैः स्वबुद्धिसामर्थ्यमेव उपयुज्यते न तु स्वभावावेशाः तथा च ऊहाजनितविषयाः। परमेकः कविः तमेव विषयं स्वोद्वेगान् भावकतां च योजयित्वा परिशीलयति।

उदाहरणार्थमेकः वृक्षशास्त्रज्ञः एकं नूतनपुष्पं दृष्ट्वा तस्य जातिविषये चिन्तयति। परम् एकः कविः तमेव पुष्पं दृष्ट्वा तस्य सौन्दर्यास्वादनेन आत्मानं विस्मरति। तथा अलौकिकानन्दं च प्राप्नोति। तादृशस्य कवेः अलौकिकानन्द-जनितकर्म एव काव्यम्।



## प्रथमः प्रकाशः

## संस्कृतकाव्यरचनाप्रभेदाः

### १. भरतमुनिनोक्तकाव्यरचनाप्रभेदाः

भरतमुनिना स्वीये ग्रन्थे नाट्यशास्त्रे अष्टादशेऽध्याये रूपकाणां विषये विस्तृततया विचारः कृतः। उक्तं यथा – **अत ऊर्ध्वं प्रवक्ष्यामि दशरूपविकल्पनम्।** भरतमुनिः रूपकाणि दश इति स्पष्टीकृतवान्। तेषां नामानि यथा –

**नाटकं सप्रकरणम् अङ्को व्यायोग एव च।**
**भाणः समवकारश्च वीथी प्रहसनं डिमः।।**
**ईहामृगश्च विज्ञेया दशेमे नाट्यलक्षणे।।**

**नाट्यशास्त्रे दशरूपकाणि :–**

१) नाटकम् २) प्रकरणम् ३) अङ्कः
४) व्यायोगः ५) भाणः ६) समवकारः
७) वीथी ८) प्रहसनम् ९) डिमः
१०) ईहामृगः

अथ एतेषां दशरूपकाणां लक्षणानि उच्यन्ते –

**१. नाटकलक्षणम्**

**प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव।**
**राजर्षिवंश्यचरितं तथैव दिव्याश्रयोपेतम्।।**
**नानाविभूतिभिर्युतमृद्धिविलासादिभिर्गुणैश्चैव।**
**अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं नाम।।**

यत्र प्रख्यातेतिवृत्तः, नायकोऽपि प्रख्यातः, राजर्षिवंशोत्पन्नः अथवा देवयोनिजातः, नानाप्रकारकाः विभूतियुक्तः, विलासादि गुणयुक्तः अङ्कप्रवेशकाढ्यं तत् भवति नाटकं भवति।

**नृपतीनां यच्चरितं नानारसभावचेष्टितं बहुधा।**
**सुखदुःखोत्पत्तिकृतं भवति हि तन्नाटकं नाम।।**
**अस्यावस्थोपेतं कार्यं प्रसमीक्ष्य बिन्दुविस्तारात्।**
**कर्तव्योऽङ्कः सोऽपि गुणान्वितं नाट्यतत्त्वज्ञैः।।**
**अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान्।**
**नानाविधानयुक्तो यस्मात्तस्माद् भवेदङ्कः।।**
**यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः।**
**किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः।।**
**ये नायका निगदितास्तेषां प्रत्यक्षचरितसंयोगः।**
**नानावस्थोपेतः कार्यस्त्वङ्कोऽविप्रकृष्टस्तु।।**

नानारसनिबद्धं, राजचरितयुक्तं, सुखदुःखोत्पत्तिकृतं भवति नाटकम्। अस्यावस्थामनुसृत्य 'अङ्कः' कर्तव्यः। अङ्क इति कश्चन रूढशब्दः। रसभावैश्च वक्तव्यस्य वस्तुनः अवरोहणमत्र भवति। यत्र अर्थस्य समाप्तिः, बीजस्य च संहारः भवति सः भवति अङ्कः। नायकानां चरितसम्भोगादयः यत्र प्रत्यक्षं, सः भवति अङ्कः। अत्र विप्रकृष्टता नैव भवति।

**नायकदेवीगुरुजनपुरोहितामात्यसार्थवाहानाम्।**
**नैकरसान्तरविहितो ह्यङ्क इति स वेदितव्यस्तु।।**
**क्रोध प्रसादशोकाः शापोत्सर्गोऽथ विद्रवोद्वाहौ।**
**अद्भुतसंभवदर्शनमङ्के प्रत्यक्षजानिस्युः।।**
**एकदिवसप्रवृत्तः कार्यस्त्वकोऽर्थबीजमधिकृत्य।**
**आवश्यककार्याणामविरोधेन प्रयोगेषु।।**
**एकाङ्केन कदाचिद्बहूनि कार्याणि योजयेद्धीमान्।**
**आवश्यककार्याणामविरोधेन तत्र काव्यानि कार्याणि।।**

अङ्के तु नायकदेवीगुरुजनपुरोहितामात्य सार्थवाहानां चरितं भवति। यत्र रसाः अन्तर्विहिताः भवन्ति, एतेषां धारणेन अथवा सामाजिकानां बुद्धौ एतेषामारोहणं भवतीत्यतः अस्य अनुच्छेदस्य 'अङ्क' इति नाम।

अङ्केषु क्रोधप्रसादशोकशापोपद्रवविवाहविस्मयजनकादयाः विषयाः सन्दृश्यन्ते ।अङ्के केवलं एकदिवसप्रवृत्तः विषयः इतिवृत्तरूपेण स्वीक्रियते। स च विषयः मूलकथावस्त्वाश्रित्य एव भवेत्।

**रङ्गं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रामः।**
**बीजार्थयुक्तियुक्तं कृत्वा काव्यं यथार्थरसम्।।**
**ज्ञात्वा दिवसावस्थां क्षणयाममुहूर्तलक्षणोपेताम्।**
**विभजेत्सर्वमशेषं पृथक्पृथक्काव्यमङ्केषु।।**
**दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम्।**
**अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधातव्यम्।।**
**सन्निहितनायकोऽङ्कः कर्तव्यो नाटके प्रकरणे वा।**
**परिजनकथानुबन्धः प्रवेशको नाम विज्ञेयः।।**
**प्रकरणनाटकविषये पञ्चाद्या दशपरा भवन्त्यङ्काः।**
**अङ्कान्तसन्धिषु च प्रवेशकास्तेषु तावन्तः।।**

रङ्गं तु ये प्रविष्टाः तेषां सर्वेषां निष्क्रामः अवश्यं भवेयुः । कथावस्तुं बीजार्थयुक्तियुक्तं कृत्वा रसानुरूपः कार्यः। यदि दिवसाऽवसानपर्यन्तं अङ्के सर्वं नोपद्यते तर्हि अङ्कच्छेदं कृत्वा प्रवेशकैः तद् विधातव्यम्। अङ्केषु नायकस्य उपस्थितिः अनिवार्या भवति। यदि कथांशः परिजनसम्बन्धः तर्हि प्रवेशकैः तत् विज्ञातव्यम्। नाटकेषु न्यूनातिन्यूनं पञ्चाङ्काः भवेयुः । अधिकाधिकं दशाङ्काश्च।

**अङ्कच्छेदं कृत्वा मासकृतं वर्षसञ्चितं वापि।**
**तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित्।।**
**यः कश्चित्कार्यवशाद्गच्छति पुरुषः प्रकृष्टमध्वानम्।**
**तत्रप्यङ्कच्छेदः कर्तव्यः पूर्ववत्तज्ज्ञैः।।**
**अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम्।**
**प्रकरणनाटकविषये प्रवेशकः संविधातव्यः।।**
**नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः।**
**प्राकृतभाषाचारः प्रयोगमाश्रित्य कर्तव्यः।।**

अङ्कच्छेदं कृत्वा मासकृतं वर्षकृतं च कार्यं दर्शयेत्। परमिदं ज्ञातव्यं यत् एकवर्षाधिकाः घटनाः न दर्शनीयाः। यः कश्चित् कार्यवशाद् गच्छति तत्र अङ्कच्छेदं कृत्वा प्रवेशकैः तद् विज्ञातव्यम्। प्रवेशके उत्तममध्यमपात्रयोः वृत्तान्तं नैव भवेत्। उदात्तवचनानां (संस्कृतादि) प्रयोगः न भवेत्। प्रवेशके भाषा, आचारश्च प्राकृतं भवेत्।

**कालोत्थानगतिरसौ व्याख्यासंरम्भकार्यविषयाणाम्।**
**अर्थाभिधानयुक्तः प्रवेशकः स्यादनेकार्थः।।**
**बह्वाश्रयमपि कार्यं प्रवेशकैः संक्षिपेच्च सन्धिषु वा।**
**बहुचूर्णपदैर्युक्तं जनयति खेदं प्रयोगस्य।।**
**यत्रार्थस्य समाप्तिर्न भवत्यङ्के प्रयोगबाहुल्यात्।**
**वृत्तान्तस्वल्पकथैः प्रवेशकैः सोऽभिधातव्यः।।**

यत्राभिनयसामग्रयः अधिकाः भवन्ति, तत्र तत् प्रवेशकद्वारा अभिधातव्यः। युद्धः, राज्यभ्रंशः, नगरोपरोधनः, मरणादयः विषयाः अङ्के प्रत्यक्षरूपेण न भवेत्। ते विषयाः प्रवेशकैः संविधेयाः।

**अङ्के प्रवेशके च प्रकरणश्रित्य नाटके वापि।**
**न वधः कर्तव्यः स्याद्योऽभ्युदयी नायकः ख्यातः।।**
**अपसरणमेव कार्यं ग्रहणं वा सन्धिरेव वा योज्यः।**
**काव्यश्लेषैर्बहुभिर्यथारसं नाट्यतत्त्वज्ञैः।।**
**न महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा।**
**ये तत्र कार्यपुरुषाश्चत्वारः पञ्च वा ते स्युः।।**
**कार्यं गोपुच्छाग्रं कर्तव्यं काव्यबन्धमासाद्य।**
**ये चोदात्ता भावास्ते सर्वे पृष्ठतः कार्याः।।**
**सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम्।**
**निर्वहणे कर्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः।।**

नाटकेषु नायकानां वधः न दर्शनीयः। तस्य शत्रुद्वारा ग्रहणं वा, अपसरणं वा, सन्धिर्वा दर्शनीयः। नायकेनसाकं कार्यपुरुषाः चत्वारः वा पञ्च वा भवेयुः। न ततोऽप्यधिकम्। काव्यं गोपुच्छाग्रं कर्तव्यम्। तस्याधारश्च प्रयोजनबन्धं भवेत्। उदात्तभावाः ते सर्वे पृष्ठतः कार्याः।

**२. प्रकरणलक्षणम् –**

**यत्र कविरात्मशक्त्या वस्तु शरीरं च नायकं चैव ।**
**औत्पत्तिकं प्रकुरुते प्रकरणमिति तद् बुधैर्ज्ञेयम् ।।**
**यदनार्षमथाहार्यं काव्यं प्रकरोत्यभूतगुणयुक्तम् ।**
**उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ।।**
**यन्नाटके मयोक्तं वस्तु शरीरं च वृत्तिभेदाश्च ।**
**तत्प्रकरणेऽपि योज्यं सलक्षणं सर्वसन्धिषु तु ।।**

प्रकरणे कथावस्तुः,शरीरं,नायकः एते सर्वेपि साङ्कल्पिकाः भवन्ति । न तु इतिहासप्रसिद्धाः । नाटके वस्तु,शरीरं,वृत्तिभेदाश्च ये प्रोक्ताः ते सर्वेऽपि प्रकरणेऽपि योज्याः । यथा लक्षणं सर्वसन्धिषु ।

**विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।**
**चरितं यन्नैकविधं ज्ञेयं तत्प्रकरणं नाम ।।**
**नोदात्तनायककृतं न दिव्यचरितं न राजसम्भोगम् ।**
**बाह्यजनसंप्रयुक्तं तज्ज्ञेयं प्रकरणं तज्ज्ञैः ।।**
**दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् ।**
**मन्दकुलस्त्रीचरितं काव्यं कार्यं प्रकरणे तु ।।**

विप्र,वणिक्,सचिव,पुरोहित,अमात्यानां चरितं नाट्यालेखं करोति तद्भवति प्रकरणम् । प्रकरणे नायकः न उदात्तः,न दिव्यः,न च राजा । परं साधारणजनसंयुक्तं भवति। प्रकरणं दास,विट,वेश्योपचारकारणोपेतं मन्दकुलस्त्रीचरितं काव्यं भवति ।

**सचिवश्रेष्ठब्राह्मणपुरोहितामात्यसार्थवाहानाम् ।**
**गृहवार्ता यत्र भवेन्न तत्र वेश्याङ्गना कार्या ।।**
**यदि वेशयुवतियुक्तं न कुलस्त्रीसङ्गमोऽपि स्यात् ।**
**अथ कुलजनप्रयुक्तं न वेशयुवतिर्भवेत्तत्र ।।**
**यदि वा कारणयुक्त्या वेशकुलस्त्रीकृतोपचारः स्यात् ।**
**अविकृतभाषाचारं तत्र तु पाठ्यं प्रयोक्तव्यम् ।।**

यत्र सचिव,ब्राह्मण,पुरोहित,अमात्यादीनां गृहवार्ता भवति तत्र वेश्यां नायिका न कार्या। यदि वेश्यायुवतियुक्तं भवति तर्हि कुलाङ्गनानां सम्पर्कः न कार्यः। तथैव कुलाङ्गनाचरितप्रसङ्गे वेश्यायुतिर्न भवेत्। अथवा कुशलतया वेश्यां,कुलाङ्गनां च दर्शयति तर्हि तत्र विकृतभाषाप्रयोगः न भवेत्।

**मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽत्र तत्त्वज्ञैः।**
**संस्कृतवचनानुगतः संक्षेपार्थः प्रवेशकवत्॥**
**शुद्धः संकीर्णो वा द्विविधो विष्कम्भकोऽपि कर्तव्यः।**
**मध्यमपात्रः शुद्धः संकीर्णो नीचमध्यकृतः॥**
**अङ्कान्तरालविहितः प्रवेशकोऽर्थक्रियां समभिवीक्ष्य।**
**संक्षेपात्सन्धीनामर्थानां चैव कर्तव्यः॥**

प्रकरणे मध्यमपुरुषैः नित्यं विष्कम्भकः योज्यः। विष्कम्भकः द्विविधः १) शुद्धविष्कम्भकः २) सङ्कीर्णविष्कम्भकः इति । शुद्धे केवलं मध्यमपात्रमेव भवति। सङ्कीर्णेषु नीचपात्रेण साकं मध्यमपात्रमपि भवति। यदि आवश्यकता भवति तर्हि अङ्कानामन्तराले प्रवेशकः स्थापनीयः।

**३ अङ्कलक्षणम्**

**प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात्।**
**दिव्यपुरुषैर्वियुक्तः शेषैर्युक्ता भवेत् पुंभिः॥**
**करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च।**
**स्त्रीपरिदेवितबहुलो निर्वेदितभाषितैश्चैव॥**
**नानाव्याकुलचेष्टः सात्त्वत्यारभटिकैशिकीहिनः।**
**कार्यः काव्यविधिज्ञै सततं ह्युत्सृष्टिकाङ्कस्तु॥**

उत्सृष्टिकाङ्के प्रायः प्रख्यातवस्तुविषयः भवति,कदाचित् अप्रख्यातश्च। अस्मिन् दिव्यपुरुषाः न, दिव्येतरपुरुषाः एव भवन्ति। प्रायः अत्र करुणरसः एव भवति। युद्धः प्रहारश्च अस्मिन् न भवति। स्त्रीणां विलापः निर्वेदितभाषितैश्च भवन्ति। नानाव्याकुलचेष्टः सात्वती, आरभटी तथा कैशिकीवृत्तिरहितः भवति।

**४ व्यायोगलक्षणम् –**

**व्यायोगस्तु विधिज्ञैः कार्यः प्रख्यातनायकशरीरः।**
**अल्पस्त्रीजनयुक्तस्त्वेकाहकृतस्तथा चैव ॥**
**बहवश्च तत्र पुरुषा व्यायच्छन्ते यथा समवकारे।**
**न च तत्प्रमाणयुक्तः कार्यस्त्वेकाङ्क एवायम् ॥**
**न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः।**
**युद्धनियुद्धाऽऽघर्षणसंघर्षकृतश्च कर्तव्यः ॥**

व्यायोगे प्रख्यातः नायकः,अल्पस्त्रीजनः,एकदिवसवृत्तश्च भवति। अत्र यथा समवकारे तथैव बहवः पुरुषाः भवन्ति। परं समवकारवत् बृहत् न भवति। व्यायोगे एकः एव अङ्कः भवति। अस्मिन् नायकः दिव्यः न भवति। राजर्षिः नायकनिबद्धः भवति। अस्मिन् युद्धः,नियुद्धः,आघर्षण,संघर्षाश्च उपनिबद्धाः भवन्ति।

**५ भाणलक्षणम् –**

**आत्मानुभूतशंसी परसंश्रयवर्णनाविशेषस्तु।**
**विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च ॥**
**परवचनमात्मसंस्थं प्रतिवचनैरुत्तरोत्तरग्रथितैः।**
**आकाशपुरुषकथितैरङ्गविकारैरभिनयैश्चैव ॥**
**धूर्त्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव।**
**एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥**

भाणे एकप्रयोजनयुक्ताः अनेकाः घटनाः भवन्ति। आत्मानुभूत–शंसी परसंश्रयवर्णनाविशेषः भवति भाणः। परवचनमपि स्वयमुक्त्वा तस्य उत्तरोत्तरं स्वयं कथयति। कदाचित् आकाशभाषितश्रवणेन अङ्गविकारेण अभिनयं करोति। अत्र पात्राणि भवन्ति धूर्ताः, विटाश्च। भाणेतु एकः एव अङ्कः भवति, बहुचेष्टायुक्तश्च भवति भाणः।

**६ समवकारलक्षणम्**

**देवासुरबीजकृतः प्रख्यातोदात्तनायकश्चैव।**
**त्र्यङ्कस्तथा त्रिकपटस्त्रिविद्रवः स्यात् त्रिशृङ्गारः ॥**

**द्वादशनायकबहुलो ह्यष्टादशनाडिकाप्रमाणश्च।**
**वक्ष्याम्यस्याङ्कविधिं यावत्यो नाडिका यत्र।।**
**अङ्कस्तु सप्रहसनः सविद्रवः सकपटः सवीथीकः।**
**द्वादशनाडीविहितः प्रथमः कार्यः क्रियोपेतः।।**
**कार्यस्तथा द्वितीयः समाश्रितो नाडिकाश्चतस्रस्तु।**
**वस्तुसमानविषयो द्विनाडिकाः स्यात् तृतीयस्तु।।**
**नाडीसंज्ञा ज्ञेया मानं कालस्य यन्मुहूर्तार्धम्।**
**तन्नाडिकाप्रमाणं यथोक्तमङ्केषु संयोज्यम्।।**
**या नाडिकेति संज्ञा कालविभागे क्रियाभिसंपन्ना।**
**कार्या च सा प्रयत्नाद् यथाक्रमेणैव शास्त्रोक्ता।।**
**अङ्कोऽङ्कस्त्वन्यार्थः कर्त्तव्यः काव्यबन्धमासाद्य।**
**अर्थं हि समवकारे ह्यप्रतिसम्बन्धमिच्छन्ति।।**
**युद्धजलसंभवो वा वाय्वग्निगजेन्द्रसंभ्रमकृतो वा।**
**नगरोपरोधजो वा विज्ञेयो विद्रवस्त्रिविधः।।**
**वस्तुगतक्रमविहितो दैववशाद्वा परप्रयुक्तो वा।**
**सुखदुःखोत्पत्तिकृतास्त्रिविधः कपटोऽत्र विज्ञेयः।।**
**त्रिविधश्चाऽत्र विधिज्ञैः पृथक्पृथक्कार्ययोगविहितार्थः।**
**श्रृङ्गारः कर्त्तव्यो धर्मे चार्थे च कामे च।।**

समवकारस्य बीजं भवति देवासुरयुद्धम्। नायकः प्रख्यातः तथा उदात्तश्च भवति। अस्मिन् त्रयः अङ्काः,द्वादश नायकाः, त्रिष्वपि अङ्केषु कपटविद्रवश्रृङ्गारादयः भवन्ति। आहत्य अष्टादश नाडिकाप्रमाणः कालः अस्य भवति। प्रथमः अङ्के द्वादशनाडिकाः, द्वितीयाङ्के चतस्त्रःनाडिकाः,त्रितीयेङ्के नाडिका द्वयं च भवति। त्रिष्वपि अङ्केषु कपटविद्रवश्रृङ्गारादयः भवन्ति इति पूर्वमुक्तम्। ते यथा –

**विद्रवः त्रिप्रकारकाः –**

(१) युद्धजलसम्भवः (२) वायु,अग्नि,गजेन्द्र सम्भ्रमकृतः (३) नगरोपरोधजः

**कपटः त्रिप्रकारकाः –**

(१) वस्तुगतक्रमविहितः (२) दैववशाद् उत्पन्नः (३) परप्रयुक्तः अस्मिन् सुखदुःखमुभयमपि भवतः।

**श्रृङ्गारः अपि त्रिप्रकारकाः–**

(१) धर्मशृङ्गारः (२) अर्थशृङ्गारः (३) कामशृङ्गारः इति। एतेषां सर्वेषामपि पृथक् प्रयोजनानि सन्ति।

**यस्मिन् धर्मप्रापकमात्महितं भवति साधनं बहुधा।**
**व्रतनियमतपोयुक्तो ज्ञेयोसौ धर्मशृङ्गारः।।**
**अर्थस्येच्छायोगाद्बहुधा चैवार्थतोऽर्थशृङ्गारः।**
**स्त्रीसंप्रयोगविषयेष्वर्थार्था वा रतिर्यत्र।।**
**कन्याविलोभनकृतं प्राप्तौ स्त्रीपुंसयोस्तु रम्यं वा।**
**निभृतं साऽऽवेगं वा यत् स भवेत् कामशृङ्गारः।।**
**उष्णिग्गायत्र्याद्यान्यन्यानि च यानि बन्धकुटिलानि।**
**वृत्तानि समवकारे कविभिस्तानि प्रयोज्यानि।।** [१]

यस्मिन् धर्मप्रपाकमात्महितं साधनं बहुधा भवति, व्रतनियमतपोयुक्तः भवति सः भवति धर्मशृङ्गारः। **अर्थत इष्यत इति अर्थः** इति व्युत्पत्यनुसारमर्थस्य इच्छायोगात् च अर्थशृङ्गारः। यस्मिन् शृङ्गारे कन्याविलोभनकृतं प्राप्तौ स्त्रीपुंसयोः रम्यं वा निभृतं वा यत् आवेगं स भवेत् कामशृङ्गारः।

**७ वीथीलक्षणम्**

**सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्त्रयोदशभिः।**
**वीथी स्यादेकाङ्का तथैकहार्या द्विहार्या वा।।**
**अधमोत्तममध्याभिर्युक्ता स्यात् प्रकृतिभिस्तिसृभिः।**
**उद्घात्यकावलगितावस्पन्दित नाल्पसत्प्रलापाश्च।।**
**वाक्केल्यथ प्रपञ्चो मृदवाधिबले छलं त्रिगतम्।**
**व्याहारो गण्डश्च त्रयोदशाङ्गान्युदाहृदान्यस्याः।।**

वीथ्यां सर्व रसाः,सर्वलक्षणानि च भवन्ति। अस्मिन् त्रयोदशाङ्गाः भवन्ति। एकः एव अङ्कश्च भवति। पात्राणि एकं वा द्वयं भवति। अस्मिन् उत्तमाधममध्यम-पात्राणि भवन्ति।

पूर्वोक्तप्रकारेण त्रयोदशाङ्गाः यथा -

| | | |
|---|---|---|
| १) उद्घात्यकम् | २) अवलगितम् | ३) अवस्पन्दितम् |
| ४) नाली | ५) असत्प्रलापः | ६) वाक्केली |
| ७) प्रपञ्चः | ८) मृदवम् | ९) अधिबलम् |
| १०) छलम् | ११) त्रिगतम् | १२) व्याहारः |
| १३) गण्डम् | | |

**पदानि त्वगतार्थानि ये नराः पुनरादरात्।**
**योजयन्ति पदैरन्यैस्तदुद्घात्यकमुच्यते॥**

उद्घात्यकोनाम यस्मिन् उक्तानां पदानामर्थः साक्षेपः भवति, फलतः तान् पदान् अन्यैः पदैः योजयन्ति।

**यत्रान्यस्मिन् समावेश्य कार्यमन्यत् प्रसाध्यते।**
**तच्चावलगितं नाम विज्ञेयं नाट्ययोक्तृभिः॥**

अवलगिते अन्यस्मिन् समावेश्य कार्यमन्यद् प्रसाद्यते।

**आक्षिप्तेऽर्थे तु कस्मिंश्चिच्छुभाशुभसमुत्थिते।**
**कौशलादुच्यतेऽन्योऽर्थस्तदवस्पन्दितं भवेत्॥**

अवस्पन्दिते कश्मिंश्चित् शुभाशुभसमुत्थिते आक्षिप्ते अर्थे कौशलादन्यः अर्थः उच्यते।

**हास्येनोपगतार्थप्रहेलिका नालिकेति विज्ञेया॥**
**हास्येनोपगतार्थप्रेहलिका नालिकेति कथ्यते॥**
**मूर्खजनसन्निकर्षे हितमपि यत्र प्रभाषते विद्वान्।**
**न च गृह्यतेऽस्य वचनं विज्ञेयोऽसत्प्रलापोऽसौ॥**

मूर्खजनसन्निकर्षे विद्वान् हितमपि प्रभाषते, परं तस्य वचनं नैव गृह्यते तत् भवति असत्प्रलापः ।

**एकद्विप्रतिवचना वाक्केली स्यात्प्रयोगेऽस्मिन् ।**
**यदसद्भूतं वचनं संस्तवयुक्तं द्वयोः परस्परं यत्तु ।**
**एकस्य चार्थहेतोः स हास्यजननः प्रपञ्चः स्यात् ।।**

प्रयोगसमये अनेक प्रतिवचना वाक्केली स्यात् । असद्भूतवचनं यदि परस्परद्वयोः संस्तवयुक्तं एकस्य च अर्थहेतोः स भवति प्रपञ्चः ।

**यत्कारणाद् गुणानां दोषीकरणं भवेद्विवादकृतम् ।**
**दोषगुणीकरणं वा तन्मृदवं नाम विज्ञेयम् ।।**

यत् कारणात् गुणानां विवादकृतं दोषीकरणं भवति अथवा दोषगुणीकरणं भवति तत् मृदवं स्यात् ।

**परवचनमात्मनश्चोत्तरोत्तरसमुद्भवं द्वयोर्यत्र ।**
**अन्योन्यर्थविशेषकमधिबलमिति तद् बुधैर्ज्ञेयम् ।।**

परवचनस्ववचनयोः उत्तरोत्तमन्योन्यार्थविशेषकमधिबलं भवति ।

**अन्यार्थमेव वाक्यं छलमभिसन्धानहास्यरोषकरम् ।**
**श्रुतिसारूप्याद्यस्मिन् बहवोऽर्था युक्तिभिर्नियुज्यन्ते ।**
**यद्धास्यमहास्यं वा तत् त्रिगतं नाम विज्ञेयम् ।।**

उक्तानां वाक्यानमन्यार्थपर्यवसानं छलं भवति । श्रुतिसारूप्यात् युक्तिभिः हास्यम्, अहास्यं वा, बहवः अर्थाः यस्मिन् युज्यन्ते तद् त्रिगतम् ।

**प्रत्यक्षवृत्तिरुक्तो व्याहारो हास्यलेशार्थः ।**
**संरम्भसंभ्रमयुतं विवादयुक्तं तथापवादकृतम् ।**
**बहुवचनाक्षेपकृतं गण्डं प्रवदन्ति तत्त्वज्ञाः ।।**

भाविकालस्य पूर्वकथनमेव व्याहारः । सम्भ्रमे कोपेनोक्तानां विषयाणां प्रत्यक्षरूपेण दर्शनमेव गण्डम् ।

## ८ प्रहसनलक्षणम्

**प्रहसनमपि विज्ञेयं द्विविधं शुद्धं तथा च सङ्कीर्णम् ।**
**वक्ष्यामि तयोर्युक्त्या पृथक्पृथग्लक्षणविशेषम् ।।**
**भगवत्तापसविप्रैरन्यैरपि हास्यवादसंबद्धम् ।**
**कापुरुषसंप्रयुक्तं परिहासभाषणप्रायम् ।।**
**अविकृतभाषाचारं विशेषभावोपपन्नचरितपदम् ।**
**नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनन्तु ।।**
**वेश्याचेटनपुंसकविटधूर्त्ता बन्धकी च यत्र स्युः ।**
**अनिभृतवेषपरिच्छदचेष्टितकरणैस्तु सङ्कीर्णम् ।।**
**लोकोपचारयुक्ता या वार्त्ता यश्च दम्भसंयोगः ।**
**स प्रहसने प्रयोज्यो धूर्त्तप्रविवादसम्पन्नः ।।**

प्रहसनं द्विविधं ज्ञेयं शुद्धं सङ्कीर्णं च । भगवत्तापसविप्रैः अन्येरपि पुरुषैः परिहासभाषणं यथा क्रीयते तथा तत् भवति प्रहसनम्। शुद्धप्रहसने विकृताचरणं वा विकृतभाषा च न भवति । सुनिश्चितगतिश्च भवति। हास्यः आरम्भात् अन्तपर्यन्तं भवति । अस्य विरुद्धो भवति सङ्कीर्णः । लोकोपचारयुक्ता या वार्ता यश्च दम्भसंयोगः धूर्त्तप्रविवादद्वारा तत् प्रहसने प्रयोज्यः ।

## ९ डिमलक्षणम्

**प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव ।**
**षड्रसलक्षणयुक्तश्चतुरङ्को वै डिमः कार्यः ।।**
**शृङ्गारहास्यवर्जं शेषैः सर्वै रसैः समायुक्तः ।**
**दीप्तरसकाव्ययोनिर्नानाभावोपसम्पन्नः ।।**
**निर्घातोल्कापातैरुपरागेणेन्दुसूर्ययोर्युक्तः ।**
**युद्धनियुद्धाधर्षणसंफेटकृतश्च कर्तव्यः ।।**
**मायेन्द्रजालबहुलो बहुपुस्तोत्थानयोगयुक्तश्च ।**
**देवभुजगेन्द्रराक्षसयक्ष पिशाचावकीर्णश्च ।।**

**षोडशनायकबहुलः सात्त्वत्यारभटीवृत्तिसम्पन्नः।**
**कार्यो डिमः प्रयत्नान्नायाश्रयभावसम्पन्नः॥**

डिमे वस्तुविषयः प्रख्यातः, नायकम प्रख्यातः, उदात्तश्च भवेत्। अस्मिन् षड्रसाः लक्षणाव्यपित्रयः षड्भवन्ति। चत्वारः अङ्काः, हास्यशृङ्गारान् त्यक्त्वा अन्ये षड्रसाः च भवन्ति। निर्धात, उत्कलापात, सूर्यचन्द्र ग्रहणम्, युद्धनियुद्धाध–र्षणादिविषयाः अत्रान्तर्भूताः।

अस्मिन् माया, इन्द्रजालादयाः, देव,नाग,राक्षस,यक्ष,पिशाचादयाः, षोडशनायकाः, सात्वती (वीररसः) तथा आरभटीवृत्तयः च अन्तर्भवन्ति।

**१० ईहामृगलक्षणम्**

**दिव्यपुरुषाश्रयकृतो द्विव्यस्त्रीकारणोपगतयुद्धः।**
**सुविहितवस्तुनिबद्धो विप्रत्ययकारकश्चैव॥**
**उद्घातपुरुषप्रायः स्त्रीरोषग्रथितकाव्यबन्धश्च।**
**संक्षोभविद्रवकृतः संफेटकृतस्तथा चैव॥**
**स्त्रीभेदनापहरणावमर्दनप्राप्तवस्तुशृङ्गारः।**
**ईहामृगस्तु कार्यः सुसमाहितकाव्यबन्धश्च॥**
**यद्व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव।**
**ईहामृगेऽपि ते स्युः केवलममरस्त्रिया योगः॥**
**यत्र तु वधेप्सितानां वधो ह्युदग्रो भवेद्धि पुरुषाणाम्।**
**किञ्चिद्व्याजं कृत्वा तेषां युद्धं शमयितव्यम्॥**

दिव्यपुरुषाश्रयः कथा, दिव्यस्त्रीकारणोपगतयुद्धः व्यवस्थितः तथा विश्वसनीयश्च कथावस्तुः प्रायः स्त्रीरोषग्रदिताः उद्धतपुरुषाः संक्षोभविद्रवसम्पुटीकृताः भवन्ति। स्त्रीभेदन, अपहरणावमर्दनप्राप्तवस्तुशृङ्गारः तथा सुसमाहितकाव्यबन्धः भवति ईहामृगः। व्यायोगे यत् प्रयोजनमुक्तं तदेव प्रयोजनं ईहामृगस्यपि, तथैव व्यायोगे विद्यमान पात्रवृत्तिरसादयः अन्तर्भूताः। यत्र वधेप्सितानां वधः अत्यन्तक्रूरः भवति तथा व्याजं कृत्वा तेषां युद्धं शमयितव्यम्।

## २.भामहेनोक्तकाव्यरचनाप्रभेदाः

भामहः यथा स्वीये ग्रन्थे काव्यालङ्कारे काव्यभेदाः प्रतिपादितवान् –

**शब्दार्थौसहितौ काव्यं गद्यं पद्यं च तद्विधा।**
**संस्कृतं प्राकृतं चान्यदपभ्रंश इति त्रिधा।।**

अत्र भामहेन **शब्दार्थौसहितौ काव्यम्** इति काव्यलक्षणं प्रतिपाद्य गद्यं,पद्यमिति तद्भेदद्वयमपि स्पष्टीकृतः। पुनः तौ द्वावपि विभागौ संस्कृतादिभेदेन त्रिविधं प्रोक्तम्। **संस्कृतम्, प्राकृतम्, अपभ्रंशमि**ति। यतः संस्कृतालङ्कारिकाः तत्कालीन देशभाषा काव्यानपि संस्कृतकाव्यसमानत्वेनशभ्यस्थवन्तः।

**वृत्तदेवादिचरितशंसिचोत्पद्यवस्तु च।**
**कलाशास्त्राश्रयञ्चेति चतुर्थाभिद्यते पुनः।।**

पुनः काव्यं चतुर्विधम्। यथा वृत्तदेवादिचरितम्,कल्पितकथावस्तुयुक्तम्, सङ्गीतादि-कलासम्बन्धम्, व्याकरणदिशास्त्रसम्बन्धमिति। पुनश्च काव्यम् पञ्चधा प्रोक्तं यथा –

**सर्गबन्धोऽभिनेयार्थं तथैवाख्यायिका कथे।**
**अनिबद्धश्च काव्यादि तत्पुनः पञ्चधोच्यते।।**

अत्र वदति काव्यं पुनः **महाकाव्यरूपकाख्यायिकाकथामुक्तकमि**ति पञ्चविधम्। महाकाव्यम् सर्गबन्धम्, रूपकमभिनेयार्थम्,आख्यायिकाख्यायिकायुक्तम्, कथा कथारूपम्, मुक्तकमनिबद्धम् च भवति। संक्षिप्ततया एवं वक्तुं शक्यते यत् काव्यं गद्यपद्यभेदेन द्विविधम्। भाषानुसारेण संस्कृतम्, प्राकृतम्, अपभ्रंशमिति गद्यस्य पद्यस्य अपि भेदत्रयम्। आहत्य षट्भेदाः। कथावस्त्वनुसृत्य भेदचतुष्टयम्। ६X४=२४ भेदाः आहत्य काव्यस्य भवति। उपर्युक्तान् चत्वारिंशत्यापि भेदान् तत्स्वरूपानुसारेण महाकाव्यादि पञ्चसु भेदेषु अन्तर्भवति।

### २.१ महाकाव्यलक्षणम्

**सर्गबन्धो महाकाव्यं महतां च महच्च यत्।**
**अग्राम्यशब्दमर्थ्यञ्च सालङ्कारं सदाश्रयम् ।।**

सर्गरूपेण बन्धः भवति महाकाव्यम्। महापुरुषसम्बद्धं, प्रामाण्ययुक्तं, शब्दार्थौ आग्रम्यौ भवतः, अलङ्कारं, सुविशेषयुक्तञ्च भवति महाकाव्ये।

**मन्त्रदूतप्रयाणाजिनायकाभ्युदयैश्च यत्।**
**पञ्चभिः सन्धिभिर्युक्तं नातिव्याख्येयमृद्धिमत्।।**

महाकाव्ये कर्तव्यालोचना,दूतप्रयाणं, युद्धम्, नायकाभ्युदयश्च भवेत्। पञ्चसन्धियुक्तं यथा मुखसन्धि,प्रतिमुखसन्धि,गर्भसन्धि,अवमर्शसन्धि, उपसंहृति-सन्धि,अतिव्याख्यानापेक्षया सामान्याः यथा अवगच्छेयुः तथा भवेत्। उदात्तविषय-वर्णनदि समृद्धियुक्तं भवेत्।

**चतुर्वर्गाभिधानेऽपि भूयसार्थोपदेशकृत्।**
**युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक्।।**

काव्यं चतुर्वर्गपुरुषार्थबोधकं भवेत्। तत्रापि अर्थमधिकृत्य उपदिशेत्। तथा च लोकस्वभावनिरूपणेनसाकं विविधरसयुक्तं च भवेत्।

**नायकं प्रागुपन्यास्य वंशवीर्याश्रुतादिभिः।**
**न तस्यैव वधं ब्रूयादन्योत्कर्षाभिधित्सया।।**

उत्तमवंशपराक्रमशास्त्राभ्यासादिभिः सद्गुणैः नायकमुपन्यस्य, तदनु प्रतिनाय-कस्योत्कर्षां वर्णयेदिति विचिन्त्य नायकस्य वधः न ब्रूयात्।

**यदि काव्यशरीरस्य न स व्यापयितेष्यते।**
**न चाभ्युदभाक्तस्य मुथादौ ग्रहणं स्तवे।।**

यदि कविः नायकं काव्यशरीररूपेण भवितुं नैच्छति तर्हि तं आदावेव स्तुत्यर्थं ग्रहणं व्यर्थम्भवति। इति महाकाव्यलक्षणं प्रोक्तम्।

**२.२ रूपकलक्षणम्**

**नाटकं द्विपदिशम्यारासकस्कन्धकादि यत्।**
**उक्तं तदभिनेयार्थमुक्तोन्यैस्तस्य विस्तरः।।**

नाटकं,द्विपदी,शम्या,रासकं,स्कन्धकादिकं अभिनेयार्थम् उक्ताः। एतेषां विस्तृत विश्लेषणं इतरैः,नाम भरतादिभिः स्पष्टिकृतमिति,अर्थात् तदृष्ट्वा तल्लक्षणोऽवगन्तव्यः इति भामहस्य अभिप्रायः।

**२.३ आख्यायिकालक्षणम्**

**संस्कृतानाकुलब्तव्यशब्दार्थपदवृत्तिना।**
**गद्येन युक्तोदात्तार्थ सोच्छ्वासाख्यायिका मता।।**

संस्कृतभाषायां श्रव्यसुन्दरं,शब्दार्थयुक्तं,पदवृत्तियुक्तं,उदत्तार्थयुक्तं, उच्छ्वास-सहितं या भवति सा आख्यायिका मता।

**वृत्तमाख्यायते तस्यां नायकेन स्वचेष्टितम्।**
**वक्त्रां चापरवक्त्राश्च काले भाव्यर्थशंसि च ।।**

अस्यामाख्यायिकायां स्वचेष्टितां स्वीयां कथां वदति नायकः। कदाचित् भाविविषयान् सूचयितुं वक्त्रा, अपरवक्त्रा इति छन्दसामुपयोगः क्रियते ।

**कवेरभिप्रायकृतैः कथनैः कैश्चिदङ्किता।**
**कन्याहरणसङ्ग्रामविप्रलम्भोदयान्विता ।।**

आख्ययिका कवेः अभिप्रायेणनिर्मितकथनैः चिह्निता भवति। यत्र कन्याहरणयुद्धविप्रलम्भनायकस्याभिवृद्ध्यादयः विषयाः वर्णयन्ति सा भवत्या-ख्यायिका।

**२.४ कथालक्षणम्**

**न वक्तापरवक्त्राभ्यां युक्ता सोच्छ्वासवत्यपि।**
**संस्कृतासंस्कृता चेष्टा कथापभ्रंशभाक्तथा ।।**

कथायां वक्त्रापवक्त्रप्रयोगो वा उच्छ्वासविभागो वा न भवति। संस्कृते असंस्कृते प्राकृते वा कथा भवितुमर्हति।

**अन्यैः स्वचरितं तस्यां नायकेन तु नोच्यते।**
**स्वगुणाविष्कृतिं कुर्यादभिजातः कथं जनः ।।**

कथायां नायकः स्वचरितं नोच्यते। यतोहि अभिजातः स्वगुणाविष्कृतिं कथं कुर्यात्?

**२.५ अनिबद्धलक्षणम्**

**अनिबद्धं पुनर्गाथाश्लोकमात्रादि तत्पुनः।**
**युक्तं वक्रस्वभावोक्त्या सर्वमैव तदिष्यते ।।**

अनिबद्धं नाम इतरश्लोकैः साकं बद्धं न भवति। अर्थात् मुक्तकम्। पूर्वापरनिरपेक्षया रससस्वादजनकं भवति मुक्तकम्। गाथा (प्राकृतपद्य)रूपे वा, श्लोक (संस्कतपद्य)रूपे वा अनिबद्धरूपे विद्यमानं पद्यमेव मुक्तकम्।

## ३.दण्डिनोक्त काव्यरचनाप्रभेदाः

महाकवि दण्डिः स्वीये ग्रन्थे काव्यादर्शे काव्यरचनाप्रक्रियामधिकृत्य विस्तृतविश्लेषणमकरोत्। यथा–

**गद्यं पद्यं मिश्रश्च तत्त्रिधैव व्यवस्थितम्।**
**पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा।।**

काव्यशरीरं गद्यं, पद्यं मिश्रमिति त्रिधा विद्यन्ते। चतुष्पदी पद्यम्। तच्च पद्यम् **वृत्तमिति** (अक्षरसङ्ख्यायाम् आधारितम् वृत्तम्। यथा वंशस्थवसन्ततिलकादि) **जातिरिति** (मात्रासङ्ख्यायाम् आधिरितं जातिः। यथा आर्यादयः) द्विधा।

### ३.१ पद्यलक्षणम्

पद्यस्य विस्ताररूपेण समालोचिते सति दण्डिः इत्थमुवाच–

**मुक्तकं कुलकं कोषः सङ्घाता इति तादृशः।**
**सर्गबन्धांश रूपत्वादनुक्तः पद्यविस्तरः।।**

मुक्तकम्, कुल्कम्, कोषः, सङ्घातः इति तादृशः पद्यविस्तरः सर्गबन्धस्य महाकाव्यस्य अंशरूपत्वात् अत्र नोक्तः।

### महाकाव्यलक्षणम्

**सर्गबन्धो महाकाव्यम् उच्यते तस्य लक्षणम्।**
**आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्।।**

सर्गरूपेण विभक्तं श्रव्यकाव्यम्भवति महाकाव्यम्। आशीर्वचने वा नमस्कारे वा वस्तुनिर्देशे वा काव्यमिदमारभ्यते।

**इतिहासकथोद्भूतमितरद्वा सदाश्रयम्।**
**चतुर्वर्गफलायत्तं चतुरोदात्त नायकम्।।**

इतिहासकथां वा, इतरप्रसिद्धकथां वा, सदाश्रितकथां वा, चतुर्वर्गफल–सम्बन्धं चतुरतथा उदात्तनायकयुक्तं च भवति महाकाव्यम्।

**नगरार्णव शैलर्तु चन्द्रोदयवर्णनैः।**
**उद्यानसलिलक्रीडामधुपानरतोत्सवैः।।**
**विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः।**
**मन्त्रद्यूतप्रयाणादि नायकाभ्युदयैरपि।।**

नगरसमुद्रपर्वतऋतुचन्द्रोदयसूर्योदयादि वर्णनेन, उद्यानजलक्रीडामधुपान-सुरतोत्सवानां वर्णनेन, विप्रलम्भैः,विवाहैः, कुमारोदयवर्णनेन, मन्त्र(राजकार्यविचारः) द्यूतयुद्धयात्रा, युद्धनायकाभिवृद्ध्यादीनां वर्णनेन महाकाव्यत्वं स्ध्यिति।

**अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम्।**
**सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः॥**
**सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम्।**
**काव्यं कल्पान्तरस्थायी जायते सदाऽलङ्कृतिः॥**

पूर्वोक्तवर्णनादिभिः अलङ्कृतम्, असंक्षिप्तं, श्रृङ्गारादिरसैः परिपूर्णं, अनतिविस्तीर्णं श्रवणाय सुष्टुवृत्तैः, सुसन्धिभिर्विभक्तं, सर्वत्र सर्वेष्वपि सन्धिषु भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम्, सर्गैर्विभक्तं, सु अलङ्कारयुक्तं काव्यं कल्पान्तरस्थायी जायते।

**न्यूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न दुष्यति।**
**यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः॥**

अत्रोक्तवर्णनैः कैश्चिदङ्गैः न्यूनमपि, काव्यं, स्वीकृतेषु वर्णनास्वेव सहृदयाः यदि आह्लादं प्राप्नुवन्ति तर्हि न दुष्यति।

**गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम्।**
**निराकरणमित्येषु मार्गः प्रकृतिसुन्दरः॥**

गुणतः नायकं प्रागुपन्यस्य, तेन नायकेन शत्रूणां पराजयः वर्णयति। एषः मार्गः स्वभावेन सुन्दरः भवति।

**वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि।**
**तज्जयान्नायकोत्कर्षं कथनं च धिनोति नः॥**

शत्रूणां वंशवीर्यशास्त्रपाण्डित्यादिविषयान् वर्णयित्वा, तज्जयात् नायकोत्कर्षकथनं च नः आह्लादयति।

### ३.२ गद्यलक्षणम्

**अपादः पदसन्तानो गद्यमाख्यायिका कथा।**
**इति तस्य प्रभेदौ द्वौ तयोराख्यायिका किल॥**

पद्यवत् पादविभजनारहितपदसमुदायः एव गद्यम्। तस्य **कथा आख्यायिका** इति प्रभेदौ द्वौ।

**आ.i. कथा–आख्यायिकालक्षणम्**

**नायकेनैव वाच्यान्या नायकेनेतरेण वा।**
**स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः॥**

नायकेन वा इतरेण वा कथा वाच्या। अत्र भूतार्थविषयान् कथयतः नायकस्य, स्वगुणाविष्क्रियादोषः न भवति।

**अपि तन्वियमो दृष्टस्तत्राप्यन्यैरुदीरणात्।**
**अन्यो वक्ता स्वयं वेति कीदृग्वा भेदकारणम्॥**
**वक्त्रं चापवकत्रं च स्वोच्छासत्वं च भेदकम्।**
**चिह्नमाख्यायिका याश्चेत्प्रसङ्गेन कथास्वपि॥**
**आर्यादिवत् प्रयोगः किं न वक्त्रापवक्त्रयोः।**
**भेदश्च दृष्टो लम्बादिरुच्छ्वासो वास्तु किम् ततः॥**

वक्त्रापवक्त्रान् आख्यायिकायामेव प्रयोक्तव्य इति नियमः नास्ति। आर्याच्छन्दसः प्रयोग इव एतानपि कथायां प्रोक्तव्यः। तद्वदेवाख्ययिकायां विद्यमान–प्रकरणान् उच्छ्वास इति, कथायां विद्यमान प्रकरणान् लम्बकमिति च वक्तव्यमिति केचन वदन्ति। नाममात्रभेदेन किं प्रयोजनमित्यर्थः।

**तत् कथाख्यायिकेत्येका जातिः संज्ञा द्वयाङ्किता।**
**अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः॥**

तस्मात् कथामाख्यायिकेति संज्ञा द्वयमस्ति चेदपि एका एव जातिः। शेषाः अर्थात् खण्डकथा, परिकथा, कथानिकेति ये सन्ति ते सर्वेऽपि कथायामेव अन्तर्भवन्ति। मिश्राणि नाटकादीनि तेषामन्यत्र विस्तरः।

**३.३ चम्पूलक्षणम्**

**गद्यपद्यमयी काचित् चम्पूरित्यभिधीयते॥**

गद्यपद्यमिश्रितं, नाटकादि रूपकाणि। तेषां विस्तृतवर्णनम् अन्यत्र अर्थात् नाट्यशास्त्रादिषु प्रोक्तम्। काचित् गद्यपद्यमयी चम्पूरिति अभिधीयते।

## ४. वामनोक्तकाव्यरचनाप्रभेदाः

वामनः स्वीयग्रन्थे काव्यालङ्कारसूत्रे काव्यरचनाप्रक्रियायाः विचारः कृतः। यथा- **काव्यं गद्यं पद्यं च ॥**

### ४.१. गद्यलक्षणम्

**गद व्यक्तायां वाचि** इति धातोः **गदमदचरयमश्नावुपसर्गे** इति कर्मणि **यत्** प्रत्यये सति गद्यमिति रूपम्। यद्वा **स्तनगदी देवशब्दे** इति चौरादिकणिजन्ताद् **अचो यत्** इति भवार्थेयत्प्रत्यये सति गद्यमिति रूपम्। तच्च गद्यं त्रिधा भिन्नमिति। यथा- **गद्यं वृत्तगन्धि चूर्णमुत्कलिकाप्रायं च ॥**

गद्यं त्रिधा विभक्तम्। क) वृत्तगन्धिः ख) चूर्णम् ग) उत्कलिकाप्रायम्

### क. वृत्तगन्धिलक्षणम्

**पद्यभागवद् वृत्तगन्धि ॥** अर्थात् पद्यभागसदृशं गद्यं वृत्तगन्धिरुच्यते ।

### ख. चूर्णलक्षणम्

**अनाविद्धललितपदं चूर्णम् ॥**

अनाविद्धान्यदीर्घसमासानि ललितानि पदानि चूर्णम्। अर्थात् दीर्घ-समासरहित तथा कोमलपदयुक्तं गद्यं चूर्णं भवति।

### ग. उत्कलिकाप्रायम्

**विपरीतमुत्कलिकाप्रायम् ॥**

चूर्णस्य विपरीतरूपेण अर्थात् दीर्घसमाससहित तथा कठिनपदयुक्तगद्यम् उत्कलिकाप्रायम्।

### ४.२. पद्यम्

**पद्यमनेकभेदम् ॥** पद्यम् समार्धसमविषमादि भेदेन अनेकानि भवन्ति। **तदनिबद्धं निबद्धं च ॥**

गद्यपद्यरूपं काव्यम् अनिबद्धं (मुक्तकम्),निबद्धं (महाकाव्यम्) इति रूपद्वयम्। अनयोः प्रसिद्धत्वात् ग्रन्थेऽस्मिन् तल्लक्षणं नोक्तम्। इति काव्यालङ्कारसूत्रे काव्यरचनाप्रक्रियाः प्रतिपादिताः।

## ५.धनञ्जयोक्तकाव्यरचनाप्रभेदाः

दशरूपककर्ता धनञ्जयः स्वीयग्रन्थे रूपकाणां विषये प्रतिपादितवान्। तेषां मते आहत्य दशरूपकाः सन्ति। यथा–

**नाटकं सप्रकरणं भाणः प्रहसनं डिमः।**
**व्यायोगसमवकारौ वीथ्यङ्केहामृग इति ।।**

(१) नाटकम् (२) प्रकणम् (३) भाणः (४) प्रहसनम्
(५) डिमः (६) व्यायोगः (७) समवकारः (८) वीथी
(९) अङ्कः (१०) ईगामृगः

### ५१. नाटकलक्षणम्

**पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते।**
**प्रविश्य तद्वदपरः काव्यमास्थापयेत् नटः ।।**

यदा सूत्रधारः पूर्वरङ्गं विधाय निर्गच्छति तदा तद्वदपरः प्रविश्य काव्यस्य प्रस्थावनां कुर्यात्।

**दिव्यमर्त्ये सा तद्रूपो मिश्रमन्यतरस्तयोः।**
**सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ।।**

यः स्थापकः कथावस्त्वनुरूप वेषभूषान् धृत्वा प्रविशेत्। यदि कथावस्तुः देवतासम्बन्धी तर्हि दिव्यरूपे, यदि वस्तु मानवसम्बन्धी तर्हि मानवरूपे, मिश्रं चेत् दिव्यरूपे वा मर्त्यरूपे वा प्रवेष्टुं शक्नोति। काव्यवस्तुस्थापने बीजं वा प्रमुखपात्रसूचनां वा दद्युः।

**एषामन्यतमेनार्थं पात्रं चाक्षिप्य सूत्रभृत्।**
**प्रस्तावनान्ते निर्गच्छेत् ततो वस्तु प्रपञ्चयेत् ।।**

सूत्रधारः एवं प्रकारेणामुखं कृत्वा रङ्गमञ्चान्निर्गच्छेत्। ततः वस्तु प्रपञ्चयेत्।

**अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान्।**
**कीर्तिकामो महोत्साहस्त्रय्यास्त्राता महीपतिः ।।**
**प्रख्यातवंशो राजर्षिर्द्विव्यो वा यत्र नायकः।**
**तत्प्रख्यातं विधातव्यं वृत्तमत्राधिकारिकाम् ।।**

नाटके नायकः प्रसिद्धकुलोत्पन्नः, उत्कृष्टगुणैर्युक्तः, धीरोदात्तः, प्रतापवान्, कीर्तिकामः, उत्साहसम्बन्धः, वेदरक्षकः, प्रख्यातवंशजः, राजर्षि, देवता वा भवितुमर्हन्ति। अत्राधिकारिकं, प्रख्यातञ्च वृत्तम्भवेत्।

**आद्यन्तमेव निश्चित्य पञ्चधा तद्विभज्य च।**
**खण्डशः सन्धिसंज्ञांश्च विभागानपि खण्डयेत्॥**

आद्यन्तं निश्चित्य सम्पूर्णकथां मुखप्रतिमुखगर्भविमर्शनिर्वहणरूपेण पञ्चधा विभक्तव्या।

**एको रसोऽङ्गो कर्तव्यो वीरः शृङ्गार एव वा।**
**अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम्॥**

नाटके अङ्गीरसः शृङ्गारो वीरो वा एकः एव भवति। अङ्गरसरूपेण सर्वेषां रसानां स्वीकारः ,निर्वहणसन्धौ अद्भुतरसस्यैव उपनिबन्धनं भवेत्।

**पताकास्थानकान्यत्र बिन्दुरन्ते च बीजवत्।**
**एवमङ्काः प्रकर्तव्याः प्रदेशादिपुरस्कृताः॥**
**पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं परम्॥**

नाटके भावाभावसूचकानां पताकास्थानानां सन्निवेशः अवश्यम्भवेत्। अस्मिन् बिन्दुनामकार्थप्रकृतेः प्रयोगः, तथा अन्ते बीजपरामर्शः च भवेत्। नाटके अङ्कानां सङ्ख्या पञ्च वा दश वा भवितुं शक्नुवन्ति। पञ्चाङ्कयुक्तनाटकमवरं दशाङ्कयुक्तं नाटकञ्च परम् ज्ञेयम्।

### ५.२. प्रकरणलक्षणम्

**अथप्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम्।**
**अमात्यविप्रवणिजामेकं कुर्याच्च नायकम्॥**
**धीरप्रशान्तं सापायं धर्मकामार्थतत्परम्।**
**शेषं नाटकवत्सन्धिप्रवेशकरसादिकम्॥**

प्रकरणस्य इतिवृत्तं कल्पितं तथा लोकसंश्रयं भवेत्। मन्त्री, ब्रह्मणः, वणिक् वा नायकः भवितुं शक्नोति। नायकः धीरप्रशान्तः तथा धर्मकामार्थतत्परः च भवेत्। नाटकवत् सन्धिप्रवेशकरसादिकं प्रकरणेऽपि भवेत्।

**नायिकातु द्विधा नेतुः कुलस्त्री गणिका तथा।**
**क्वचिदेकैव कुलजा वेश्या क्वापि द्वयं क्वचित्।।**
**कुलजाभ्यन्तरा बाह्या वेश्या नातिक्रमोऽनयोः।**
**आभिः प्रकरणं त्रेधा सङ्कीर्णं धूर्तसङ्कुलम्।।**

प्रकरणे नायिका द्विधा भवति कुलीना अथवा गणिका। क्वचित् कुलस्त्री नायिका भवति क्वचित् वेश्या। क्वचिदुभावपि कुलस्त्री आभ्यन्तरनायिका भवति। वेश्या बाह्या च नायिका। इत्थं प्रकरणं त्रिधा विभक्तम्। यथा- कुलजानिष्ठ, गणिकानिष्ठ, उभयानिष्ठ।

### ५.३. भाणलक्षणम्

**भाणस्तु धूर्तचरितं स्वानुभूतं परेण वा।**
**यत्रोपवर्णयेदेको निपुणः पण्डितो विटः।।**
**सम्बोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः।**
**सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यसंस्तवैः।।**
**भूयसा भारती वृत्तिरेकाङ्कं वस्तु कल्पितम्।**
**मुखनिर्वहणे साङ्गे लास्याङ्गानि दशापि च।।**

भाणे अत्यधिकचतुरः विटः, स्वानुभूतपरानुभूतधूर्तचरितवर्णनं कुर्यात्। अत्र सम्बोधनोक्तिप्रत्युक्तिः आकाशभाषितैः सम्भवति। अत्र द्वितीयपात्रं नैव विद्यते। भाणे सौभाग्यस्य तथा शौर्यस्य वर्णनं कृत्वा शृङ्गाररसस्य तथा वीररसस्य सूचनां ददाति। अस्मिन् भारतीवृत्तेः प्राधान्यं तथा एकाङ्कः दृश्यते। अस्य कथावस्तुः कविकल्पितं भवति। अत्र पञ्चसन्धयः न भवन्ति। मुख तथा निर्वहण सन्धी भवतः। अस्मिन् दशापि लास्याङ्गानां सन्निवेशः भवति।

### ५.४. प्रहसनलक्षणम्

**तद्वद् प्रहसनं त्रेधा शुद्धवैकृतसङ्करैः।।**

तद्वत् नाम- **भाणवद्वस्तुसन्धिसन्ध्यङ्गलास्यादीनामतिदेशः।**प्रहसननामकरूपकभेदे वस्तुसन्धिसन्ध्यङ्गाङ्कलास्यादयः भाणवत् भवन्ति । इदं च प्रहसनं शुद्धविकृतसङ्करेति त्रिधा।

**५.५. डिमलक्षणम्**

**डिमे वस्तु प्रसिद्धं स्याद् वृत्तयः कैशिकीं विना।**
**नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः ॥**
**भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः।**
**रसैरहास्यशृङ्गारैः षड्भिर्दीप्तैः समन्वितः ॥**
**मायेन्द्रजालसंग्रामकोधोद्भ्रान्तादिचेष्टितैः।**
**चन्द्रसूर्योपरागैश्च न्याय्ये रौद्ररसेऽङ्गिनि ॥**
**चतुरङ्कश्चतुस्सन्धिर्निर्विमर्शो डिमः स्मृतः ॥**

डिमे कौशिकींवृत्तिंविना प्रसिद्धं वस्तु कथारुपेण भवेत्। अस्मिन् देवतागन्धर्वयक्ष–राक्षसनागादयः मर्त्येतरजातयः नेतारः भवन्ति। अथवा भूतप्रेतपिशाचादि पात्राणामपि अत्र सन्निवेशः विद्यते। अस्मिन् पात्रसङ्ख्या षोडश सन्ति। ते च उद्धताः भवन्ति। हास्यशृङ्गारातिरिक्त षड्रसाः अत्र भवन्ति। अस्य अङ्गिरसः भवित रौद्रम्। अस्मिन् मायेन्द्रजालयुद्धक्रोधोद्भ्रान्तिचन्द्रसूर्यग्रहणादयः विषयाः अन्तर्भवन्ति। चतुरङ्क चतुस्सन्धि निर्विमर्शः भवति डिमः।

**५.६. व्यायोगलक्षणम्**

**ख्यातेतिवृत्तो व्यायोगः ख्यातोद्धतनराश्रयः ॥**
**हीनो गर्भविमर्शाभ्यां दीप्ताः स्युर्डिमवद्रसाः।**
**अस्त्रीनिमित्तसंग्रामो जामदग्न्यजये यथा ॥**
**एकाहाचरितैकाङ्को व्यायोगो बहुभिर्नरैः॥**

व्यायोगस्य कथावस्तु इतिहासप्रसिद्धं भवति। तथा च उद्धतनराश्रयश्च। अस्मिन् गर्भः, विमर्शः इति सन्धिद्वयं,रसादयः डिमवत् भवति। अस्त्रीनिमित्तसङ्गामः, कथा एकस्यैव दिवसस्य, तथा च एकाङ्कयुक्तं भवति। अस्मिन् अधिकसङ्ख्याकाः पुरुषपात्राः भवन्ति।

**५.७. समवाकारलक्षणम्**

**कार्यं समवकारेऽपि आमुखं नाटकादिवत् ॥**
**ख्यातं देवासुरं वस्तु निर्विमर्शास्तु सन्धयः।**

**वृत्तयो मन्दकैशिक्यो नेतारो देवदानवाः ।।**
**द्वादशोदात्तविख्याताः फलं तेषां पृथक्पृथक् ।**
**बहुवीररसाः सर्वे यद्वदम्भोधिमन्धने ।।**
**अङ्कैस्त्रिभिस्त्रिकपटस्त्रिशृङ्गारस्त्रिविद्रवः ।**
**द्विसन्धिरङ्कः प्रथमः कार्यो द्वादशनालिकः ।।**
**चतुर्द्विनालिकावन्त्यौ नालिका घटिकाद्वयम् ।**
**वस्तुस्वभावदैवारिकृताः स्युः कपटास्त्रयः ।।**
**नगरोपरोधयुद्धे वाताग्न्यादिकविद्रवः ।**
**धर्मार्थकामैः शृङ्गारो नात्रबिन्दुप्रवेशकौ ।।**
**वीथ्यङ्गानि यथालाभं कुर्यात्प्रहसने यथा ।।**

समवकारेऽपि नाटकवदामुखं योजनीयम्। कथा देवता अथवा दैत्यसम्बद्धं ख्यातवस्तुश्च भवेत्। अस्मिन् निर्विमर्शाः सन्धयः भवन्ति। कौशिकी भिन्नवृत्तयः तथा नेतारः देवदानवाः, नायकः इतिहासप्रसिद्धः, अङ्कत्रयं, त्रिकपट, त्रिशृङ्गार, त्रिविद्रवः, प्रथमे अङ्के मुख प्रतिमुखादि सन्धयः तथा कथा द्वादशनालिकाश्च भवेत्। विद्यमान द्विषु अङ्केषु क्रमशः चतुर्द्विनालिका भवेत्। अस्मिन् नगरोपरोधः, युद्धं तथान्येन वा कारणेन पलायनादीनां वर्णनं भवेत्। अत्र धर्मार्थकामैः शृङ्गारः लभ्यते। तथा बिन्दुनामक अर्थप्रकृतिः प्रेवशकनामक सूचकश्च नैव लभ्यते। प्रहसनवदेव अस्मिन् यथावश्यकं तथा वीथ्यङ्गानि योजनीयानि।

### ५.८. वीथीलक्षणम्

**वीथी तु कैशिकीवृत्तौ सन्ध्यङ्गाङ्कैस्तु भाणवत् ।।**
**रसः सूच्यस्तु शृङ्गारः स्पृशेदपि रसान्तरम् ।**
**युक्ता प्रस्तावनाख्यातैरङ्गैरुद्घात्यकादिभिः ।।**
**एवं वीथी विधातव्या द्व्येकपात्रप्रयोजिता ।।**

वीथी कौशिकीवृत्तियुक्तं, सन्ध्यङ्गाङ्काः भाणवत् भवन्ति। सूच्यरसः शृङ्गारः, रसान्तरमपि स्पृशति। इत्थं वीथी द्व्येकपात्रयाजिता भवेत्।

**५.९. अङ्कलक्षणम्**

**उत्सृष्टिकाङ्के प्रख्यातं वृत्तं बुद्ध्या प्रपञ्चयेत्।**
**रसस्तु करुणः स्थायी नेतारः प्राकृतानराः॥**
**भाणवत्सन्धिवृत्त्यङ्गैर्युक्तिः स्त्रीपरिदेवितैः।**
**वाचा युद्धं विधातव्यं तथा जयपराजयौ॥**

अस्मिन् प्रख्यातवृत्तं कविः स्वबुद्ध्या प्रपञ्चयेत्। स्थायीरसः करुणः, नेतारः प्राकृताः नशश्च। अस्य सन्धिः वृत्तिश्च भाणवदेव भवति। करुणरसः अस्ति इत्यतः स्त्रीणां रोदनमधिकं भवति। वाचा युद्धं विधातव्यं तथा जयपराजयौ।

**५.१०. ईहामृगलक्षणम्**

**मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिमत्॥**
**नरदिव्यावनियमान्नायकप्रतिनायकौ।**
**ख्यातौ धीरोद्धतावन्त्यो विपर्यासादयुक्तकृत्॥**
**दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः।**
**शृङ्गाराभासमप्यस्य किञ्चित्किञ्चित्प्रदर्शयेत्॥**
**संरम्भं परमानीय युद्धं व्याजान्निवारयेत्।**
**वधप्राप्तस्य कुर्वीत वधं नैव महात्मनः॥**

ईहामृगे कथा मिश्रितं चतुरङ्कयुक्तं त्रिसन्धियुक्तं च भवति। नर, देवता नियमेन अस्य नायकस्य वा प्रतिनायकस्य वा योजना भवति। एतौ उभौ अपि इतिहासप्रसिद्धौ, धीरोद्धतौ च भवतः। प्रतिनायकज्ञानस्य भ्रान्तेः कारणादनुचितकार्यकर्तृरूपेण वर्णनं भवति। सः अनिच्छन्तीं दिव्यस्त्रियमपहरोति। एवं कविः शृङ्गाराभासमपि किञ्चित् किञ्चित् प्रदर्शयेत्। संरम्भं परमानीय व्याजात् युद्धं निवारयेत्। वधं समीपमानीय तस्य वधः न कुर्यात्।

एवं प्रकारेण धनञ्जयः स्वीये ग्रन्थे दशरूपकाणां विचारः कृतः।

## ६.विश्वनाथेनोक्त काव्यरचनाप्रभेदाः

विश्वनाथः स्वीये ग्रन्थे साहित्यदर्पणे दृश्यश्रव्यमिति काव्यस्य भेदद्वयमाह–

**दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।**
**दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकम् ।।**

### ६.१. दृश्यकाव्यम्

काव्यं दृश्यं, श्रव्यमिति द्विधा भवति। दृश्यमभिनयद्वारा प्रदर्शयन्ति। चाक्षुषप्रत्यक्षत्वेन रसात्मकवाक्यं काव्यं दृश्यमित्यभिधीयते। तदभिनेता अभिनये रामादिरूपस्यारोपणं वा अनुसन्धानं वा कुर्वन्ति। अतः तत् रूपकमित्युच्यते। रूपकस्य भेदाः दशप्रोक्ताः। यथा–

### ६.१.अ. रूपकाणि

**नाटकमथप्रकरणं भाणव्यायोगसमवकारडिमाः ।**
**ईहामृगाङ्कवीथयः प्रहसनमिति रूपकाणि दश ।।**

१) नाटकम्  २) प्रकरणम्  ३) भाणः  ४) व्यायोगः

५) समवकारः ६) डिमः  ७) ईहामृगः  ८) अङ्कः

९) वीथी  १०) प्रहसनम्

### ६.१.अ.१. नाटकलक्षणम्

**नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।**
**विलासद्धर्यादिगुणवद्युक्त नानाविभूतिभिः ।।**
**सुखदुःखसमुद्भूति नानारसनिरन्तरम् ।**
**पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ।।**
**प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।**
**दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ।।**
**एकएवभवेदङ्गो शृङ्गारो वीर एव वा ।**
**अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणेऽद्भुतः ।।**

**चत्वारः पञ्चवा मुख्याः कार्यव्यापृतपूरुषाः ।**
**गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम् ।।**

नाटकस्य कथावस्तुः ख्यातवृत्तं स्यात्। अस्य शरीरे पञ्चसन्धयः अवश्यम्भवेत्। सुखदुःखसमुद्भूतं नानारसनिरन्तरं, पञ्च अथवा दशाङ्कयुक्तं च भवेत्। नायकः प्रख्यातवंशजः राजर्षिः, धीरोदात्तः प्रतापवान्, दिव्यः,अदिव्यः दिव्यादिव्यः, गुणवान् नायकः भवेत्। एक एव भवेत् अङ्गी शृङ्गारो वीरो वा। अङ्गरूपेण इतरे रसाः भवितुं शक्नुवन्ति। अस्य अन्तं विस्मयोत्पादकं भवति। अस्मिन् कार्यव्यापृतपुरुषाः मुख्यतया चत्वारो वा पञ्च वा भवन्ति। अस्य रचना गोपुच्छाग्रसमाग्रं अर्थात् क्रमेण अङ्काः सूक्ष्माः कर्तव्याः।

**६.१.अ.२. प्रकरणलक्षणम्**

**भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम्।**
**शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्।।**
**सापायधर्मकामार्थपरो धीरप्रशान्तकः।**
**नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित्।।**
**तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः।**
**कितवद्यूतकारादिविटचेटकसंकुलः।।**

प्रकरणे वृत्तं लौकिकं वा कविकल्पितं वा भवेत्। अङ्गीरसः शृङ्गारः,नायकः विप्रः, अमात्यः, वणिक्, धीरशान्तः विपरीतपरिस्थित्यामपि धर्मार्थकामपरायणः च भवेत्। नायिका कुलजा वा वेश्या वा कुत्रचित् उभे अपि भवतः। तृतीये अर्थात् यत्र नायिका कुलजा वेश्या उभेऽपि भवतः तत्र धूर्तः द्यूतकारः, विटः चेटादयः भवन्ति।

**६.१.अ.३. भाणलक्षणम्**

**भाणः स्याद् धूर्तचरितो नानावस्थान्तरात्मकः।**
**एकाङ्क एक एवात्र निपुणः पण्डितो विटः।।**
**रङ्गे प्रकाशयेत्स्वेनानुभूतमितरेण वा।**
**संबोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः।।**

**सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यवर्णनैः।**
**तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती।**
**मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च।।**

भाणे धूर्तचरितचित्रणं, नानाविधलोकोपयोगी व्यवहाराः एकस्मिन् अङ्के सम्पूर्णतया भवेत्। अस्मिन् निपुणः नायकः यः विटः स्वानुभूतपरानुभूतविषयाणां परिचयः सामाजिकैः ददाति। एवं प्रकारेण आकाशभाषितैः उक्तिप्रयुक्तिद्वारा स्वाभिप्रायं सामाजिकैः बोधयति। अस्मिन् शृङ्गारवीर रसानां अभिव्यञ्जनं भवति। तच्च शौर्य, विलासवर्णनायुक्तं भवति। इतिवृत्तं कविकल्पितं, वृत्तिः भारतीवृत्तिः। सन्धिपञ्चके मुखनिर्वहणसन्धयः,दशापि लास्या-ङ्गनि अत्र अन्तर्भवन्ति।

### ६.१.अ.४. व्यायोगलक्षणम्

**ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः।**
**हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः।।**
**एकाङ्कश्च भवेदस्त्रीनिमित्तममरोदयः।**
**कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः।।**
**नाजर्षिरथदिव्यो वा भवेद्धीरोद्धतश्च सः।**
**हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः।।**

ख्यातेतिवृत्तः, स्वल्पस्त्रीजनसंयुतः, गर्भविमर्शसन्धिहीनः, एकाङ्कः अस्त्रीनिमित्तसमरः, कैशिकीवृत्तिरहितः च भवति व्यायौगः। प्रख्यातः राजर्षिर्वा दिव्यो वा धीरोद्धतः च भवेत् नायकः। हास्यशृङ्गारशान्तरसान् विहाय इतरे रसाः अङ्गीत्वेन भवन्ति।

### ६.१.अ.५. समवाकारलक्षणम्

**वृत्तं समवकारे तु ख्यातं देवासुराश्रयम्।**
**सन्धयो निविमर्शास्तु त्रयोऽङ्कास्तत्र चादिमे।।**
**सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत्पुनः।**
**नायका द्वादशोदात्ताः प्रख्याता देवमानवाः।।**
**फलं पृथक्पृथक्तेषां वीरमुख्योऽखिलो रसः।**
**वृत्तयो मन्दकैशिक्यो नात्र बिन्दुप्रवेशकौ।।**

**वीथ्यङ्गानि च तत्र स्युर्यथालभं त्रयोदश ।**
**गायत्र्युष्णिङ्मुखान्यत्र च्छन्दांसि विविधानि च ।।**
**त्रिशृङ्गारस्त्रिकपटः कार्यश्चायं त्रिविद्रवः ।**
**वस्तु द्वादशनालोभिर्निष्पाद्य प्रथमाङ्कगम् ।।**
**द्वितीयेऽङ्के चतसृभिर्द्वाभ्यामङ्के तृतीयके ।।**

प्रख्यातदेवासुराश्रितं पुराणादिप्रसिद्धं वृत्तं स्यात् । विमर्शसन्धिं विहाय इतरे सन्धयः अत्र भवन्ति । त्रयोङ्काः अत्र भवन्ति । प्रथमे अङ्के मुखप्रतिमुखसन्धिः, द्वितीये गर्भसन्धिः, तृतीये निर्वहणसन्धिश्च भवति । द्वादश उदात्ताः प्रख्याताः देवमानवाः भवन्ति । तेषां फलं पृथक् पृथक् भवति। मुख्यः रसः वीररसः इतरे च अङ्गरसाः भवन्ति । अस्मिन् गायत्री तथा उष्णिक् छन्दसां प्राधान्यं विद्यते । समवाकाराय त्रिशृङ्गारत्रिकपटत्रिविद्रवश्च भवेत् । प्रथामाङ्कस्य इतिवृत्तं २२ घट्यः, द्वितीयाङ्कः ८ घट्यः तथा तृतीयाङ्कः ४ घट्यः च भवति ।

### ६.१.अ.६. डिमलक्षणम्

**मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।**
**उपरागैश्च भूयिष्ठो डिमः ख्यातेतिवृत्तकः ।।**
**अङ्गी रौद्ररसस्तत्र सर्वेऽङ्गानि रसाः पुनः ।**
**चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ।।**
**नाया देवगन्धर्वयक्षरक्षोमहोरगाः ।**
**भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ।।**
**वृत्तयः कैशिकीहीना निर्विमर्शाश्च सन्धयः ।**
**दीप्ताः स्युः षड्रसाः शान्तहास्यशृङ्गारवर्जिताः ।।**

माया, इन्द्रजाल, संग्राम, क्रोध, उद्भ्रान्तादि चेष्टितं भवति डिमः । अस्मिन् निर्घातोल्कापात, सूर्यचन्द्रोपरागादयः विषयाः भवन्ति । ख्यातेतिवृत्तं, रौद्रः अङ्गीरसः सर्वे इतररसाः अङ्गरसाश्च भवन्ति । अङ्कचतुष्टयं अत्र भवति । विष्कम्भप्रवेशकस्य अपेक्षा नास्ति । षोडश नायकाः यथा देव–गन्धर्व–यक्ष–राक्षस–सर्प–भूत–प्रेत–पिशाचादयाः अत्यन्त उद्धताः भवन्ति । कौशिकीहीना वृत्तयः निर्विमर्शाश्च सन्धयः, हास्यशान्तशृङ्गारवर्जिताः रसाः अत्र भवन्ति ।

**६.१.अ.७. ईहामृगलक्षणम्**

**ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्तितः।**
**मुखप्रतिमुखे सन्धी तत्र निर्वहणां तथा।।**
**नरदिव्यावनियमौ नायकप्रतिनायकौ।**
**ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृत्।।**
**दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः।**
**शृङ्गाराभासमप्यस्य किञ्चित्किञ्चित्प्रदर्शयेत्।।**
**पताकानायका दिव्या मर्त्या वापि दशोद्धताः।**
**युद्धमानीय संरम्भं परं व्याजान्निवर्तते।।**
**महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो।**
**एकाङ्को देव एवात्र नेत्याहुः परे पुनः।।**
**दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे।।**

ईहामृगः ऐतिहासिकवृत्तानां कल्पितानां च वृत्तानां संम्मिश्रणं भवति। चत्वारः अङ्काः अत्र भवन्ति। मुखप्रतिमुखनिर्वहण सन्धयः अत्र भवन्ति। नायकप्रतिनायकौ नरो वा देवो वा भवितुं शक्नोति। नायकः ख्यातः धीरोद्धतश्च भवेत्। प्रतिनायकः प्रच्छन्नः अयुक्तकृत्, अनिच्छन्तीं दिव्यस्त्रियमपहरोति। पताकानायकाः दश भवन्ति। ते च देवो वा मानवो वा भवितुमर्हन्ति। अत्र प्रतिनायकस्य बलं युद्धस्थाने दर्शयित्वा यथाकथञ्चित् समापनीयम्। वधप्राप्ता अपि वधः न कार्यः। केचन ईहामृगे एकेव अङ्कः पर्याप्तः इति वदन्ति। तथा च देवानेव नायकत्वेन स्वीक्रीयते। परन्तु केचनाचार्याः षड् नायकाः, ते च दिव्यस्त्रीनिमित्तं परस्परं कोलाहलं कुर्वन्ति इति च वदन्ति।

**६.१.अ.८. अङ्कलक्षणम्**

**उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः।।**
**रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम्।**
**प्रख्यातमितिवृत्तं च कविर्बुद्ध्या प्रपञ्चयेत्।।**
**भाणवत्सन्धिवृत्त्यङ्गान्यस्मिञ्जयपराजयौ।**
**युद्धं च वाचा कर्तव्यं निर्वेदवचनं बहु।।**

उत्सृष्टिकाङ्के एकाङ्कः, प्राकृताः नराः नायकाः, करुणरसः प्रधानः, बहुस्त्री परिदेवनं, प्रख्यातमितिवृत्तं कवेः बुद्ध्या वर्णयेत्। भाणवत् सन्धिवृत्ति तथा अङ्गानि च अत्र भवन्ति। अस्मिन् जयपराजयौ, युद्धनियुद्धौ वर्णितौ। निर्वेद वचनस्यापि बाहुल्यमत्र भवति।

**६.१.अ.९. वीथीलक्षणम्**

**वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते।**
**आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः॥**
**सूचयेद्भूरि शृङ्गारं किञ्चिदन्यान्रसान् प्रति।**
**मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः॥**

वीथ्यामेकोङ्कः, एकः नायकः, आकाशभाषितैः चित्रविचित्र उत्तरप्रत्युत्तरपूर्वक अन्यान्य काल्पनिकपात्राणि च आलापसंलापेन चित्रणीयानि। अस्मिन् भूरिशृङ्गारं, अन्यान् रसान् किञ्चिच्च अभिव्यञ्जयेत्। केवलं मुखसन्धिः तथा निर्वहणसन्धिः, अर्थ प्रकृतयश्च पञ्च भवितुमर्हन्ति।

**६.१.अ.१०. प्रहसनलक्षणम्**

**भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम्।**
**भवेत्प्रहसनं वृत्तं निन्द्यानां कविकल्पितम्॥**
**अत्र नारभटी, नापि विष्कम्भकप्रवेशकौ।**
**अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा॥**
**तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः।**
**एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते॥**

प्रहसने सन्धिसन्ध्यङ्गलास्याङ्गानि भवन्ति। तथा अङ्करचना भाणवत् भवति। अस्मिन् कविकल्पिताधमप्रकृतियुक्तस्य नायकस्य इतिवृत्तं भवति। अत्र आरभटी, विष्कम्भकः तथा प्रवेशकस्य रचना न भवति। अङ्गीरसः हास्यः ऐच्छिकरूपेण वीथ्यङ्गयोजना कर्तुं शक्नोति। एवं प्रकारेण रूपकाणां लक्षणमुक्त्वा ततः परमुपरूपकाणां नामानि तल्लक्षणानि च प्रोक्तानि विश्वनाथेन।

### ६.१.आ. उपरूपकाणि

विश्वनाथस्य मतानुसारं अष्टादश उपरूपकाणि सन्ति। यथा–

**नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम्।**
**प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा।।**
**संलापकं श्रीगदितं शिल्पकं च विलासिका।**
**दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च।।**
**अष्टादश प्राहुरुपरूपकाणि मनीषिणः।**
**विना विशेष सर्वेषां लक्ष्म नाटकवन्मतम्।।**

(१) नाटिका (२) त्रोटकम् (३) गोष्ठी (४) सट्टकम्
(५) नाट्यरासकम् (६) प्रस्थानम् (७) उल्लाप्यम् (८) काव्यम्
(९) प्रेङ्खणम् (१०) रासकम् (११) संलापकम् (१२) श्रीगदितम्
(१३) शिल्पकम् (१४) विलासिका (१५) दुर्मल्लिका (१६) प्रकरणी
(१७) हल्लीशो (१८) भाणिका

### ६.१.आ.१. नाटिकालक्षणम्

**नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका।**
**प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः।।**
**स्यादन्तःपुरसम्बद्धा सङ्गीतव्यापृताथवा।**
**नवानुरागा कन्यात्र नायिका नृपवंशजा।।**
**सम्प्रवर्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः।**
**देवी भवेत्पुनर्ज्येष्ठा प्रगल्भा नृपवंशजा।।**
**पदे पदे मानवती तद्वशः सङ्गमो द्वयोः।**
**वृत्तिः स्यात्कैशिकी स्वल्पविमर्शाः सन्धयः पुनः।।**

उपरूपकेषु सर्वप्रथममुपरूपकं भवति नाटिका। अस्मिन् कविद्वारा कल्पितेतिवृत्तं, अधिकाधिकं स्त्रीचरितं, चतुरङ्किका, नृपः प्रख्यातः, धीरललितश्च नायकः भवति। अन्तःपुरसम्बद्धा सङ्गीतव्यापृता नवानुरागा नृपवंशजा कन्या अत्र नायिका भवति। नायकः नायिकां प्रति प्रेम, देवी अथवा राजमहिषेः भयेन

शङ्कितः। देवी नाम राजकुले उत्पन्ना प्रगल्भप्रकृतियुक्ता ज्येष्ठा भवति। तस्यैवानुकम्पया नायकनायिकयोः मेलनं वर्णितम्। अत्र वृत्तिः कैशिकी भवति। स्वल्पविमर्शाः सन्धयश्चात्र भवन्ति।

**६.१.आ.२. त्रोटकलक्षणम्**

**सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्।**
**त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम्॥**

त्रोटके पञ्च, सप्त, अष्ट वा अधिकाधिकं नव अङ्कानां रचना भवन्ति। अस्मिन् दिव्यमानवसम्मिश्रवृत्तयः वर्णिताः भवन्ति। प्रत्येकाङ्के अपि विदूषकस्य उपस्थितिः अवश्यम्भवेत्।

**६.१.आ.३. गोष्ठीलक्षणम्**

**प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलंकृता।**
**नोदात्तवचना गोष्ठी कैशिकीवृत्तिशालिनी॥**
**हीना गर्भविमर्शाभ्यां पञ्चषड्योषिदन्विता।**
**कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्मिता॥**

अस्मिन् नव अथवा दश साधारणपुरुषाणां चरितं वर्णयति। नोदात्तवचना, कैशिकीवृत्तियुक्ता भवति गोष्ठी । पञ्च वा षड् स्त्रीपात्राणि अत्र भवितुमर्हन्ति। गर्भविमर्शाभ्यां हीना, कामशृङ्गारसम्युक्ता, एकाङ्कविनिर्मिता च भवति गोष्ठी।

**६.१.आ.४. सट्टकलक्षणम्**

**सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम्।**
**न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः॥**
**अङ्काजवनिकाख्याः स्युः स्यादन्यन्नाटिकासमम्॥**

सट्टकमाद्यन्तं प्राकृतभाषायामेव भवेत्। अस्मिन् प्रवेशको वा विष्कम्भको वा न भवति। प्रचुरः अद्भुतरसः भवति। जवनिका नाम अङ्काः अत्र भवन्ति। अन्यत्सर्वं नाटिकासमम् भवति।

**६.१.आ.५. नाट्यरासकलक्षणम्**

**नाट्यरासकमेकाङ्कं बहुताललयस्थिति।**
**उदात्तनायकं तद्वत्पीठमर्दोपनायकम्।**
**हास्योऽङ्ग्यत्र सशृङ्गारो नारी वासकसज्जिका॥**
**मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च।**
**केचित्प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम्॥**

अस्मिन् नाट्यरासके एकमेवाङ्कं, बहुताललयस्थितिश्च भवति। उदात्तनायकः, उपनायकः पीठमर्दोऽपि भवेत्। शृङ्गारेण साकं हास्यस्यापि अत्र प्राधान्यं विद्यते। नायिका वासकसज्जिकावत् भवति। मुखनिर्वहणसन्धियुक्ता, दशापि लास्याङ्गानि अत्र भवन्ति। केचित् अत्र प्रतिमुखसन्धिं नेच्छन्ति।

**६.१.आ.६. प्रस्थानकलक्षणम्**

**प्रस्थाने नायको दासो हीनः स्यादुपनायकः।**
**दासी च नायिकावृत्तिः कैशिकी भारती तथा॥**
**सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः।**
**अङ्कौ द्वौ लयतालादिर्विलासे बहुलस्तथा॥**

प्रस्थानके नायकः दासः, उपनायकः तदोपि हीनः, नायिका दासी च भवति। कैशिकीभारतीवृत्तियुक्तम्, उपस्थापितः विषयसमाप्तिः मदिराविनोदवर्णनेनसाकं भवति। अस्मिन् लयतालादिविलासः अधिकतया भवति।

**६.१.आ.७. उल्लाप्यलक्षणम्**

**उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम्।**
**शिल्पकाङ्कैर्युतं हास्यशृङ्गारकरुणैरसैः॥**
**उल्लाप्यं बहुसङ्ग्राममस्त्रगीतमनोहरम्।**
**चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन॥**

उदात्तनायकः, देवतावृत्तं, एकाङ्कभूषितं भवति उल्लाप्यम्। शृङ्गारकरुणहास्य-रसप्रधानं, मनोहराणि सङ्ग्रामगीतानि, चतस्रः नायिकाः अङ्कत्रयश्चात्र भवन्ति।

**६.१.आ.८. काव्यलक्षणम्**

> **काव्यमारभटीहीनमेकाङ्क हास्यसङ्कुलम् ।**
> **खण्डमात्राद्विपक्षिकाभग्नतालैरलङ्कृतम् ।।**
> **वर्णमात्राछड्डणिकायुतं शृङ्गारभाषितम् ।**
> **नेता स्त्री चाप्युदात्तात्र सन्धी आद्यौ तथान्तिमः ।।**

हास्यरसप्रधानं आरभटी हीनं, एकाङ्कसङ्कुलं च भवति काव्यम् । अस्मिन् **खण्डमात्रा, वर्णमाला, छड्डलिका**दिषु अलङ्कृतमुदात्तप्रकृतियुक्तनायिका नायकः अत्र भवति । मुखनिर्वहसन्धयः अत्रावश्यं भवेत् ।

**६.१.आ.९. प्रेङ्खणलक्षणम्**

> **गर्भावमर्शरहितं प्रेङ्खणं हीननायकम् ।**
> **असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम् ।।**
> **नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम् ।**
> **नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना ।।**

नीचप्रकृतियुक्तनायकः, गर्भविमर्शरहितं, सूत्रधाररहितम्, अविष्कम्भा–प्रवेशकं,एकाङ्कं, द्वन्द्वयुद्ध, सरोषभाषण, सर्ववृत्तिसमाश्रितं प्रेङ्खणम् । नेपथ्ये नान्दीगीयते तथा तत्र **प्ररोचनापि** भवति ।

**६.१.आ.१०. रासकलक्षणम्**

> **रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम् ।**
> **भाषाविभाषाभूयिष्ठं भारतीकैशिकीयुतम् ।।**
> **असूत्रधारमेकाङ्कं सवीथ्यङ्गं कलान्वितम् ।**
> **श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम् ।।**
> **उदात्तभावविन्यासंश्रितं चोत्तरोत्तरम् ।**
> **इह प्रतिमुखं सन्धिमपि केचित्प्रचक्षते ।।**

रासकं पञ्चपात्रं, मुखनिर्वहणसमन्वितं, भाषाविभाषाभूयिष्ठं, भारतीकैशिकीयुतं, सूत्रधाररहितं, वीथ्यङ्गसहितं, एकाङ्कं, श्लिष्टनान्दीयुतं, प्रसिद्धनायिका, मुर्खः नायकः, उत्तरोत्तरोदात्तभावविन्यासं, क्वचित् प्रतिमुखसन्धिमपि प्रचक्षते ।

**६.१.आ.११. संलापकलक्षणम्**

**सलापकेऽङ्काश्चत्वारस्त्रयो वा नायकः पुनः।**
**पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः॥**
**भवेयुः पुरसंरोधच्छलसङ्ग्रामविद्रवाः।**
**न तत्र वृत्तिर्भवति भारती न च कैशिकी॥**

संलापके चत्वारः अङ्काःभवेयुः। पाषण्डः नायकः, शृङ्गारकरुणेतरः कश्चनरसः भवेत्। नगरोपरोधः, छलः, भ्रमः, संभ्रमः, संग्रामादयाः विषयाः वर्ण्यन्ते। वृत्तिः कौशिकी वा भारती वा अनपेक्षते।

**६.१.आ.१२. श्रीगदितलक्षणम्**

**प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम्।**
**प्रसिद्धनायिकं गर्वविमर्शाभ्यां विवर्जितम्॥**
**भारतीवृत्तिबहुलं स्त्रीतिशब्देन सङ्कुलम्।**
**मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम्॥**
**श्रीरासीना श्रीगदिते गायेत्किञ्चित्पठेदपि।**
**एकाङ्को भारतीप्राय इति केचित्प्रचक्षते॥**

प्रख्यातेतिवृत्तं, एकाङ्कं, प्रख्यातोदात्तनायकं, गर्भविमर्शविवर्जितं, प्रख्यात-नायिका, भारतीवृत्तिबहुलं, श्रीशब्देन सङ्कुलं, श्रीगदितं नामोपरूपकं भवति। केचन श्रीगदितस्य प्रकारान्तरत्वेन श्रीवेषधारिणी नटी रङ्गमञ्चे उपविश्य गायेत्, किञ्चित् पठेदपि इति वदन्ति।भारतीवृत्तियुक्तं एकाङ्कसमन्वितं च भवति इति श्रीगदितं वदन्ति।

**६.१.आ.१३. शिल्पकलक्षणम्**

**चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा।**
**अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः॥**
**वर्णनाऽत्र श्मशानादेर्हीनः स्यादुपनायकः।**
**सप्तविंशतिरङ्गानि भवन्त्येतस्य तानि तु॥**
**आशंसा-तर्क-सन्देहतापोद्वेग-प्रसक्तयः।**
**प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः॥**

**विलासालस्यबाष्पाणि प्रहर्षाश्वासमूढताः ।**
**साधनानुगमोच्छ्वासविस्मयप्राप्तयस्तथा ।।**
**लाभविस्मृतिसम्फेटा वैशारद्यं प्रबोधनम् ।**
**चमत्कृतिश्चेत्यमीषां स्पष्टत्वाल्लक्ष्म नोच्यते ।।**

शिल्पके चत्वारः अङ्काः, चतस्रः वृत्तयः, शान्तहास्यरसभिन्नरसाः, नायकः ब्राह्मणः, अधमप्रकृतियुक्तः उपनायकः, श्मशानादीनां वर्णना, , सप्तविंशति अङ्गानि च भवन्ति। यथा–

(१) आशंसा (२) तर्कः (३) सन्देहः
(४) तापः (५) उद्वेगः (६) प्रसक्तिः
(७) प्रयत्नः (८) ग्रथनः (९) उत्कण्ठा
(१०) अवहित्था (११) प्रतिपत्तिः (१२) विलासम्
(१३) आलस्यम् (१४) बाष्पम् (१५) प्रहर्षः
(१६) आश्वासः (१७) मूढता (१८) साधनानुगमः
(१९) उच्छ्वासः (२०) विस्मयः (२१) प्राप्ती
(२२) लाभः (२३) विस्मृतिः (२४) संफेटः
(२५) वैशारद्यम् (२६) प्रबोधनम् (२७) चमत्कृतिः इत्यादयः ।

### ६.१.आ.१४. विलासिकालक्षणम्

**शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता ।**
**विदूषकविटाभ्यां च पीठमर्देन भूषिता ।।**
**हीना गर्भविमर्शाभ्यां सन्धिभ्यां हीननायका ।**
**स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका ।।**

शृङ्गारबहुला, एकाङ्का, दशलास्याङ्गसंयुता, विदूषकविटाभ्यां तथा पीठमर्द चरितचित्राणापेक्षिता गर्भविमार्शाभ्यां हीना, हीननायकः, स्वल्पवृत्ता, सुनेपथ्या च भवति विलाकिसा ।

### ६.१.आ.१५. दुर्मल्लिकालक्षणम्

**दुर्मल्ली चतुरङ्का स्यात् कैशिकीभारतीयुता ।**
**अगर्भा नागरनरा न्यूननायकभूषिता ।।**

**त्रिनालिः प्रथमोऽङ्कास्यां विटक्रीडामयो भवेत्।**
**पञ्चनालीर्द्वितीयोऽङ्को विदूषक विलासवान्।।**
**षण्णालिकस्तृतीयस्तु पीठमर्दविलासवान्।**
**चतुर्थो दशनालिः स्यादङ्कः क्रीडितनागरः।।**

चतुरङ्का, कौशिकीभारतीयुता, गर्भरहिता, कलाकुशलपात्रयुक्ता, न्यून-नायकभूषिता, प्रथमोऽङ्कः ६ घट्यः विटक्रीडामयः, द्वितीयोऽङ्कः १०घट्यः विदूषकविलासः, तृतियोऽङ्कः १२ द्वादशघट्यः पीठमर्धविलासयुक्तः, चतुर्थोङ्कः २० घट्यः नायकक्रीडायुक्तश्च भवति इति दुर्मल्लिकायाः लक्षणम्।

### ६.१.आ.१६. प्रकरणिकालक्षणम्

**नाटिकैव प्रकरणी सार्थवाहादिनायका।**
**समानवंशजा नेतुर्भवेद्यत्र च नायिका।।**

प्रकरणिका सा नाटिका भवति या सार्थवाहादिनायकचित्रणं करोति, समानवंशजा च नायिका।

### ६.१.आ.१७. हल्लीशलक्षणम्

**हल्लीश एक एवाङ्कः सप्ताष्टौ दश वा स्त्रियः।**
**वागुदात्तैकपुरुषः कैशिकीवृत्तिरुज्ज्वला।।**
**मुखान्तिमौ तथा सन्धी बहुताललयस्थितिः।।**

एकैवाङ्कः, सप्त वा अष्ट वा दश वा स्त्रियः, वागुदात्तैकः नायकः, कैशिकीवृत्तिबहुलः मुखनिर्वहणसन्धियुक्तः, बहुताललयस्थितश्च भवति हल्लीशः।

### ६.१.आ.१८. भाणिकालक्षणम्

**भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता।**
**कैशिकीभारतीवृत्तियुक्तैकाङ्कविनिर्मिता।।**
**उदात्तनायिका मन्दनायकात्राङ्गसप्तकम्।**
**उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा।।**
**समर्पणं निवृत्तिश्च संहार इति सप्तमः।**
**उपन्यासः प्रसङ्गेन भवेत्कार्यस्य कीर्तनम्।।**

**निर्वेदवाक्यव्युत्पत्तिर्विन्यास इति स स्मृतः ।**
**भ्रान्तिनाशो विबोधः, स्यान्मिथ्याख्यानं तु साध्वसम् ।**
**सोपालम्भवचः कोपपीड्येह समर्पणम् ।**
**निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते ।।**
**संहार इति च प्राहुर्यत्कार्यस्य समापनम् ।।**

सुन्दरनेपथ्यरचना, मुखनिर्वहणान्विता, कौशिकी भारतीयुक्ता, एकाङ्का, उदात्तनायिका, मन्दनायकः सप्ताङ्गयुक्ता च भवति भाणिका। तानि सप्ताङ्गानि यथा–

**(१) उपन्यासः (२) विन्यासः (३) विबोधः (४) साध्वसः**
**(५) समर्पणम् (६) निवृत्तिः (७) सम्हारः**

(१) **उपन्यासः** – कार्यकीर्तनम् ।
(२) **विन्यासः** – निर्वेदद्योतक वचनविन्यासः ।
(३) **विबोधः** – भ्रम निराकरणम् ।
(४) **साध्वसः** – मिथ्याहङ्कारप्रदर्शनम्।
(५) **समर्पणः** – कोपपूर्वकनिन्दाबहुलवचनम् ।
(६) **निवृत्तिः** – निदर्शनोपन्यासः ।
(७) **संहारः** – समाप्तिः ।

एवमष्टादश उपरूपकाणि सुष्टु प्रतिपादितानि विश्वनाथेन ।

### ६.२. श्रव्यकाव्यम्

काव्यस्य द्वितीयः भेदः भवति श्रव्यकाव्यम् ।

**श्रव्यं श्रोतव्यमात्रं तत्पद्यगद्यमयं द्विधा ।।**

श्रवणयोग्यं यत् काव्यं तत् श्रव्यकाव्यमित्युच्यते । तच्च द्विधा विभक्तं पद्यम्, गद्यम् च ।

### ६.२.अ. पद्यकाव्यम्

**छन्दोबद्धपदं पद्यम् तेन मुक्तेन मुक्तकम् ।**
**द्वाभ्यां तु युग्मकं सान्दानितकं त्रिभिरिष्यते ।**
**कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम् ।।**

पद्यात्मककाव्यं तत्भवति यत् छन्दोबद्धं भवति। एतच्च पद्यात्मकं काव्यं बहुप्रकारेण विद्यते। यथा–

**६.२.अ.१. मुक्तकम्**

यत् पद्यमन्यानां पद्यानामाकाङ्क्षातः मुक्तो भवति तत् मुक्तकं भवति। अर्थात् यदि पादचतुष्टयग्रथितमेकमेव पद्यं वाक्यार्थबोधे पर्याप्तं स्यात् तर्हि तत्पद्यं मुक्तकमित्युच्यते

**६.२.अ.२. युग्मकम्**

यदि द्वे पद्ये खलु एकत्रैवान्विते सति एकमेव पूर्णमर्थं प्रकाशयति तर्हि तत् पद्यद्वयं युग्मकमिति कथ्यते।

**६.२.अ.३. सान्दानितकम्**

यदि पद्यत्रयं खलु एकत्रैवान्वितो सति एकमेवपूर्णमर्थं प्रकाशयति तर्हि तत् पद्यत्रयं सान्दानिकमिति कथ्यते।

**६.२.अ.४. कलापकम्**

यदि पद्यचतुष्टयं खलु एकत्रैवान्वितो सति एकमेव पूर्णमर्थं प्रकाशयति तर्हि यत पद्यचतुष्टयं कलापकमिति कथ्यते।

**६.२.अ.५. कुलकम्**

यदि पञ्चपद्यानि खलु एकत्रैवान्वितो सति एकमेव पूर्णमर्थं प्रकाशयति तर्हि यत् पञ्चपद्यानि कुलकमिति कथ्यते।

**६.२.अ.५ महाकाव्यलक्षणम्**

**सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः।**
**सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः॥**
**एकवंशभवा भूपाः कुलजा बहवोऽपि वा॥**
**शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते।**
**अङ्गानि सर्वेऽपि रसा सर्वे नाटकसन्धयः॥**
**इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम्।**

**चत्वारस्तस्य वर्णाः स्युस्तेष्वेकं च फलं भवेत् ।।**
**आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा ।**
**क्वचिन्निन्दा खलादिनां सतां च गुणकीर्तनम् ।।**
**एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः ।**
**नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ।।**
**नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते ।**
**सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ।।**
**सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ।**
**प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ।।**
**सम्योगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ।**
**रणप्रयाणोपयममन्त्रपुत्रोदयादयः ।।**
**वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ।**
**कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।।**
**नामस्य सर्गोपादेयकथया सर्गनाम तु ।।**

पद्यकाव्यप्रकारेषु सर्गबन्धात्मकः काव्यप्रकारः भवति महाकाव्यम्। अत्र एकः नायकः यः सुरः अथवा प्रख्यातराजवंशजः, धीरोदात्तश्च भवति। कुत्रचित् एकवंशोत्पन्नाः, अनेक कुलीनराज्ञामपि चरित्रचर्चा दृश्यते। शृङ्गारवीरशान्तेषु एकोरसः प्रधानरूपेण भवति। इतरे रसाः अङ्गानि भवन्ति। नाटकस्य सर्वेऽपि सन्धयः महाकाव्ये अन्तर्भवन्ति। ऐतिहासिकं वा सज्जनाश्रयं वृत्तमत्र भवति। धर्मार्थकाममोक्षादीनां पुरुषार्थचतुष्टयानां निरूपणमत्र भवति। परन्त्वेकस्यैव परमफलरूपेण उपनिबद्धं भवति। महाकाव्यस्यारम्भे मङ्गलाचरणं नमस्कारात्मको वा, आशीर्वादात्मको वा वस्तुनिर्देशात्मको वा भवति। महाकाव्ये खलनिन्दा सतांश्च गुणकीर्तनं भवति। सर्गे एकवृत्तमयैः पद्यैः अवसाने अन्यवृत्तकैः च पद्यैः रचना क्रीयते। नातिस्वल्पनातिदीर्घाः अष्टाधिकाः सर्गाः अत्र भवन्ति। सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्। सर्गबन्धात्मके काव्ये एतेषां विषयाणां साङ्गोपाङ्गवर्णनं भवेत्। यथा सन्ध्या, सूर्यः, चन्द्रः, रात्रिः, प्रदोषः, अन्धकारः, दिनम्, प्रातःकालः, मध्याह्नः, मृगया, पर्वत, ऋतु, वन, उपवन, समुद्र, सम्भोग,

विप्रलम्भ, मुनि, स्वर्ग, नगर, यज्ञ, संग्राम, यात्रा, विवाह, सामाधि, उपायचतुष्टयाः, पुत्रजन्मादयः। महाकाव्यस्य नामकरणं कवेः, वृत्तस्य, नायकस्य, इतरस्य वा आधारेण करणीयः। सर्गानामपि नाम वर्णविषयानुसारं वक्तुं शक्यते।

**६.२.अ.७. खण्डकाव्यलक्षणम्**

**खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च ।।**

महाकाव्यस्य कतिपयलक्षणयुक्तं पद्यप्रबन्धं भवति खण्डकाव्यम्।

**६.२.अ.८. कोषलक्षणम्**

**कोषः श्लेकसमूहस्तु स्यादन्योन्यानपेक्षकः ।।**
**व्रज्याक्रमेण रचितः स एवातिमनोरमः ।।**

कोषः अन्योन्यानपेक्षकानां श्लोकानां समूहः भवति। एषः कोषः तदा अतिमनोरमः भवति यदा सजातियपद्यानि एकत्र सन्निवेशं भवति।

**६.२.आ. गद्यकाव्यम्**

**वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।।**
**भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम्।**
**आद्यं समासरहितं वृत्त भागयुतं परम् ।।**
**अन्यद्दीर्घसमासाढ्यं तुर्यं चाल्पसमासकम् ।।**

समासरहितं मुक्तकं, वृत्तभागयुतं वृत्तगन्धिः, दीर्घसमासयुक्तं उत्कलिकाप्रायं, अल्पसमासकं चूर्णकं च भवति। गद्यकाव्यस्य अवान्तर भेदाः –

**६.२.आ.१. कथालक्षणम्**

**कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्।**
**क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके।**
**आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ।।**

कथायां सरसेतिवृत्तं भवति। क्वचित् आर्या छन्दसि, क्वचित् वक्त्रापवक्त्रछन्दसि रचितं भवति। अस्यारम्भे नमस्कारात्मकं मङ्गलं, खलनिन्दा तथा सज्जनप्रशंसा च भवति।

**६.२.आ.३. आख्यायिकालक्षणम्**

**आख्यायिका कथावत्स्यात्कवेर्वंशानुकीर्तनम्।**
**अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित्क्वचित्।।**
**कथांशानां व्यवच्छेद आश्वास इति बध्यते।**
**आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित्।।**
**अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम्।।**

कथावदाख्यायिकापि गद्यकाव्यस्य एकः प्रकारः भवति। अस्मिन् कवेः वंशानुकीर्तनम्, अन्यकविनां विषये चर्चा च भवति। कुत्रचित् पद्यमपि भवति। कथांशानां व्यवच्छेदः आश्वासः इत्युच्यते। अस्मिन् आर्यावक्त्रअपवक्त्रछन्दसां साहायेन वर्णनीयविषयस्य सूचनां प्रदीयते।

गद्यपद्यमयस्यकाव्यस्य त्रिभेदाः विद्यन्ते। यथा–

(१) चम्पू (२) विरुदम् (३) करम्भकम्

**६.२.इ. चम्पूकाव्यलक्षणम्**

**गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते।।**

यस्मिन् काव्ये गद्यं पद्यं च मिश्रितरूपेण भवति तत् काव्यं चम्पूरित्यभिधीयते।

**६.२.इ.१. विरुदकाव्यलक्षणम्**

**गद्यपद्यमयी राजस्तुतिः विरुदमुच्यते।।**

अर्थात् यत्र राजस्तुतिः गद्यपद्यरूपेण क्रियते तत् विरुदं भवति।

**६.२.इ.२. करम्भककाव्यलक्षणम्**

**करम्भकं तु भाषाभिर्विविधाभिर्विनिर्मितम्।।**

विविधभाषासु निर्मितः काव्यप्रकारः भवति करम्भकम्। एवं प्रकारेण विश्वनाथेन साहित्यरचनाप्रक्रियाः प्रोक्ताः।

## ७.श्रीविद्यानाथेनोक्तकाव्यरचनाप्रभेदाः

विद्यानाथेन प्रतापरुद्रियनामके स्वीयग्रन्थे काव्यप्रकरणे काव्यस्य रचनाप्रक्रियाणां विचारः सुष्टुकृतः। आदौ महाकाव्यलक्षणमुच्यते। यथा–

### ७.१.महाकाव्यलक्षणम्

**नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम्।**
**उद्यानसलिलक्रीडामधुपानरतोत्सवाः॥**
**विप्रलम्भो विवाहश्च कुमारोदयवर्णनम्।**
**मन्त्रद्यूतप्रयाणाजिनायकाभ्युदया अपि॥**
**एतानि यत्र वर्ण्यन्ते तन्महाकाव्यमुच्यते।**
**एषामष्टादशानां यैः कैश्चिदूनमपीष्यते॥**

नगर, समुद्र, पर्वत, ऋतु, चन्द्र–सूर्योदय, उद्यान, सलिलक्रीडा, मधुपान, रतोत्स्व, विप्रलम्भ, विवाह, कुमारजन्म, मन्त्र, द्यूत, विजय, युद्ध, नायकाभ्युदयादयाः विषयाः यत्र वर्ण्यन्ते तद्भवति महाकाव्यम्। एषामष्टादशानां कैश्चिदूनमपि इष्यते। एतच्च काव्यं पुनः त्रिविधम्। यथा–

**गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ।**
**गद्यपद्योभमयं काव्यं काव्यविदो विदुः॥**

गुणालङ्कारसहितौ दोषवर्जितौ शब्दार्थौ भवति काव्यं। तच्च त्रिधा गद्यपद्योभयमयम्।

**अपादो पदसङ्घातः गद्यं पद्यं चतुष्पदं।**
**असर्गबन्धमपि यद् उपकाव्यमुदीर्यते॥**

पादरहितः पदसङ्घातः भवति गद्यम्। पद्यं च चतुष्पदम्।

**गद्यपद्यमयं काव्यं चम्पूरित्यभिदीयते।**
**वक्त्रं चापरवक्त्रं च सोच्छ्वासत्व च भेदकम्॥**
**वर्ण्यते यत्र काव्यज्ञैः असावाख्यायिका मता।**

गद्यपद्यमयं काव्यं चम्पूरित्युच्यते। यत्र वक्त्रापवक्त्रछन्दः, सर्गस्य स्थाने आख्यायिका नाम उच्छ्वासः च भवति।

**अ. क्षुद्रप्रबन्धः**

क्षुद्रप्रबन्धः उदाहरणं, चक्रवालकं, भोगावली, बिरुदावली, तारावली, इत्याख्यानां लघुकाव्यानां अपरं नाम भवति। तेषां काव्यानां विस्तृतया विद्यानाथः विचारः कृतवान्।

**७.अ.१. उदाहरणलक्षणम्**

**येन केनापि तालेन गद्यपद्यसमन्वितम्।**
**जयत्युपक्रमं मालिन्यादिप्रासविचित्रितम्॥**
**तदुदाहरणं नाम विभक्त्यष्टकसम्युतम्॥**

यस्य इतिवृत्तं येनकेनापि तालेन समन्वितं गद्यपद्यं जयत्युपक्रमं मालिन्यादि प्रासविचित्रितम्, अष्टविभक्तिसम्युतं तदुदाहरणं नाम क्षुद्रप्रबन्धं भवति।

**७.अ.२. चक्रवालकलक्षणम्**

**सम्बोधनविभक्त्या यत् प्रचुरं पद्यपूर्वकम्।**
**विमुक्तपुनराकृष्ट शब्दं स्याच्चक्रवालकम्॥**

यत्र सम्बोधनाविभक्तिः, प्रचुरंपद्यं, पूर्वं यं त्यक्तं तं पुनराकृष्टं तादृशशब्दयुक्तं चक्रवालं भवति।

**७.अ.३. भोगावलीलक्षणम्**

**आद्यन्तपद्यसमुक्ता संस्कृतप्राकृतात्मिका।**
**अष्टभिर्वा चतुर्भिर्वा वाक्यैः स्कन्धसमन्विता॥**
**प्रतिस्कन्धं भिन्नवाक्यरीतिर्देवनृपोचिता।**
**सर्वतो देवशब्दादिरेषा भोगावली मता॥**

या आद्यन्तं संस्कृतप्राकृतात्मिका पद्यसंयुक्ता अष्टभिर्वा चतुर्भिर्वा वाक्यैः समन्विताः स्कन्धः, प्रतिस्कन्धे देवता नृपोचिता भिन्नवाक्यरीतिः ,आरम्भे देवताशब्दादिः भवति सा भोगावली इत्युच्यते।

**७.अ.४. बिरुदावलीलक्षणम्**

**वर्ण्यमानाङ्कविरुदवर्णनप्रचुरोज्ज्वला।**

**वाक्याडम्बरसंयुक्ता सा मता विरुदावली।।**

वर्ण्यमानङ्केषु बिरुदावलीनां वर्णनेन उज्वला तथा वाक्याडम्बरसंयुक्ता बिरुदावली।

**७.अ.५. तारावलीलक्षणम्**

**ताराणां सङ्ख्या पद्यैर्युक्ता तारावली मता।।**

तारासङ्ख्यसमाना अर्थात् सप्तविंशतिपद्ययुक्ता भवति तारावली।

एवं विद्यानाथेन प्रौढोक्तिसिद्धाः क्षुद्राः प्रबन्धाः प्रोक्ताः।

अथ श्रव्यपद्यप्रबन्धनिरूपाणानन्तरं नाटकादि दृश्यप्रबन्धनिरूपणं क्रीयते। तत्र दशरूपकाणां चर्चा विद्यन्ते । यथा–

**७.आ. दशरूपकाणि**

**नाटकं सप्रकरणं भाणः प्रहसनं डिमः।**

**व्यायोगसमवकारौ वीथ्यङ्केहामृगा दश।।**

(१) नाटकम् (२) प्रकरण् (३) भाणः

(४) प्रहसनम् (५) डिमः (६) व्यायोगः

(७) समवकारः (८) वीथी (९) अङ्कः

(१०) ईहामृगः

**७.आ.१. नाटकलक्षणम्**

**साङ्गैर्मुखप्रतिमुखगर्भमर्शोपसंहृतै।**

**पूर्वं प्रकृतिरन्येषामाधिकारिकवृत्तवत्।।**

**वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते।**

**प्रख्यातनायकोपेतं नाटकं तदुदाहृतम्।।**

साङ्गैः मुखप्रतिमुखगर्भविमर्शोपसंहारनामकपञ्चसंधिसम्पन्नं दशरूपकेषु प्रथमं नाटकम्। प्रकरणादीनां मूलाधिकरिकप्रासङ्गिकवृत्तयुक्तं वीरशृङ्गारयोः एकः यत्र

प्रधानरूपेण वर्ण्यते प्रख्यातनायकेतिहासादियुक्तं तद् भवति नाटकम्।

**७.आ.२. प्रकरणलक्षणम्**

**उत्पाद्येनेतिवृत्तेन धीरशान्तप्रधानकम्।**
**शेषं नाटकतुल्याङ्गं भवेत् प्रकरणं हि तत्॥**

यत्र उत्पाद्येतिवृत्तं नायकः धीरप्रशान्तः शेषाणि सर्वाण्यपि अङ्गानि नाटकतुल्यं भवति तत् प्रकरणमुच्यते।

**७.आ.३. भाणलक्षणम्**

**भारतीवृत्तिभूयिष्ठं शौर्यसौभाग्यसंस्तवैः।**
**सूच्यते वीरशृङ्गारौ विटेन निपुणोक्तिना॥**
**कल्पितेनेतिवृत्तेन धूर्तचारित्रवर्णनम्।**
**एकोऽङ्को मुखनिर्वाहौ यत्र भाणः स संमतः॥**

भारतीवृत्तिभूयिष्ठशौर्यसौभाग्यसंस्तुतं विटद्वारा निपुणोक्तिना वीरशृङ्गारौ सूच्येते। कल्पितेनेतिवृत्तेन, धूर्तचरितवर्णनं, एकः अङ्कः, मुखनिर्वहणसन्धियुक्तं भवति भाणः।

**७.आ.४. प्रहसनलक्षणम्**

**यत्र सन्ध्यङ्गवृत्त्यङ्गवर्णनं भाणवन्मतम्।**
**हास्यो रसः प्रधानं स्याद्भवेत्प्रहसनं हि तत्॥**

यत्र संधिः, अङ्ग, वृत्त्यङ्गवर्णनं भाणवत् भवति हास्यरसप्रधानं तत् प्रहसनम्। एतच्च प्रहसनं त्रिविधम् –

**(१) शुद्धप्रहसनम्   (२) वैकृतप्रहसनम्   (३) संकीर्णप्रहसनम्**

**७.आ.४.१. शुद्धप्रहसनलक्षणम्**

**पाषण्डविप्रप्रभृतिचेटीचेटसमाकुलम्।**
**वेषभाषादिसहितं शुद्धं हास्यवचोऽन्वितम्॥**

यत्र स्वानुकूलवेषभाषादिसहितं पाषण्डविप्रचेटचेटीपात्रसमाकुलं हास्यमयवाक्यैः अन्वितं भवति शुद्धप्रहसनम्।

**७.आ.४.२. वैकृतप्रहसनलक्षणम्**

**कामुकादिवचोवेषैः षण्ढकञ्चुकितापसैः।**
**प्रहासाभिनयप्रायं वैकृतं तत्प्रकीर्त्यन्ते।।**

कामुकादिवचोवेषैः, नपुंसककञ्चुकी तथा तापसपात्राणि यस्मिन् भवति तथा च हास्याभिनयं यत्र भवति तत् वैकृतप्रहसनमुच्यते।

**७.आ.४.३. संकीर्णप्रहसनलक्षणम्**

**यद्वीथ्यङ्गैः समाकीर्णं संकीर्णं धूर्तसंकुलम्।।**

यत् वीथ्यङ्कैः समाकीर्णं तथा धूर्ततस्करसंकुलं तत् संकीर्णप्रहसनमुच्यते।

**७.आ.५. डिमलक्षणम्**

**यत्र वस्तु प्रसिद्धं स्याद्वृत्तयः कैशिकीं विना।**
**नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः।।**
**भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः।**
**हास्यशृङ्गाररहिता रसा रौद्रप्रधानकाः।।**
**चत्वारोऽङ्काः संधयश्च चत्वारो मर्शवर्जिताः।**
**मायेन्द्रजालसङ्ग्रामसूर्यचन्द्रग्रहादयः।**
**शेषं नाटकवत् सर्वं स डिमः परिकीर्त्यते।।**

प्रसिद्धवृत्तं, कैशिकीं विना अन्यवृत्तयः यत्र भवति, देवगन्धर्वयक्षराक्षसमहानुरगः भूतप्रेतपिशचादयः षोडश अत्यन्तमुद्धताः नेतारः, रौद्ररसप्रधानां, हास्यशृङ्गाररहिता, चत्वारोऽङ्कयुक्ता, चत्वारः सन्धयः, माया, इन्द्रजाल, संग्राम, सूर्यचन्द्रग्रहणादयः शेषं नाटकवत् भवति तत् डिमः इत्युच्यते।

**७.आ.६. व्यायोगलक्षणम्**

**यत्र ख्यातेतिवृत्तं स्यादुद्धतो नायको मतः ।**
**गर्भावमर्शराहित्यं डिमवद्रसपोषणम् ।।**
**एकावसरकार्यं च स व्यायोगो महारणः ।।**

ख्यातेतिवृत्तम्, उद्धतः नायकः, गर्भावमर्शरहितं, डिमवत् रसपोषणं, अस्त्रीनिमित्तं, महारणं यत्र भवति स व्यायोग उच्यते।

**७.आ.७. समवकारलक्षणम्**

**यत्रामुखं नाटकवत् संधयो मर्शवर्जिताः ।**
**नेतारो द्वादश पृथक्फला देवासुरादयः ।।**
**वीरप्रधानाश्च रसास्त्रयोऽङ्कास्तेतु च क्रमात् ।**
**वस्तुस्वभावदैवारिकृताः स्युः कपटास्त्रयः ।।**
**पुररोधरणाम्न्यादिनिमित्ता विद्रवास्त्रयः ।**
**धर्मार्थकामानुगुणास्त्रिस्त्रः शृंगाररीतयः ।।**
**प्रथमेऽङ्के निबद्धव्या कथा यामत्रयावधिः ।**
**यामावधिर्द्वितीयेऽङ्के तृतीयेऽङ्केऽर्धयामिका ।।**
**असौ समवकारः स्याद्वीथ्यङ्गैः कैशिदन्वितः ।।**

यत्र आमुखं नाटकवत् भवति। विमर्श वर्जिताः संधयः विभिन्न उद्धेश्ययुक्ताः तथा च भिन्नकार्यनिरताः देवासुरादि द्वादशनायकाः, प्रधानरसः वीरः, त्रयः अङ्काः तेषु क्रमशः वस्तुस्वभावानुसार तथा दैवसंयोगवैरिकृताः त्रयः कपटाः, नगरस्य अग्न्यादिनिमित्त त्रयः विद्रवाः, धर्मार्थकामानुगुणं त्रिप्रकारकाः शृङ्गाररीतयः, त्रिष्वङ्केषु प्रथमेऽङ्के कथा यामत्रयावधिः निबद्धव्या, द्वितीयेऽङ्के यामावधिः, तृतीयेऽङ्के अर्थयामिका च कथा भवेत्। सः भवति समवकारः।

**७.आ.८. वीथीलक्षणम्**

**यत्र भाणवदङ्गानां क्लृप्तिर्वृत्तिस्तु कैशिकी ।।**
**शृङ्गारः परिपूर्णत्वात् सूचनीयोऽतिभूयसा ।**
**उद्धात्यकादीन्यङ्गानि सा वीथी वीथिवत्मता ।।**

यत्र भाणवदङ्गानां कल्पना भवति, वृत्तिः कैशिकी, परिपूर्णत्वेन शृङ्गाररसः सूचनीयाः ।

**७.आ.९. अङ्कलक्षणम्**

**यत्रेतिवृत्तं प्रख्यातं प्रधानं करुणो रसः ।**
**स्त्रीणां विलासो वाग्युद्धं नेतारः प्राकृता नराः ।।**
**भाणवत् संधिवृत्त्यादि स उत्सृष्टोऽङ्कसंज्ञकः ।।**

यत्र प्रख्यातेतिवृत्तं प्रधानतया करुणरसः, स्त्रीणां विलासः, वाग्युद्धः, नायकः प्राकृतनराः, भाणवत् संधिवृत्तिसहिताङ्कस्य नाम उत्सृष्टः सः अङ्कः भवति ।

**७.आ.१०. ईहामृगलक्षणम्**

**मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिकम् ।**
**मर्त्यदिव्यौ च नियमान्नायकप्रतिनायकौ ।।**
**धीरोद्धतौ स्त्रियं दिव्यां हर्तुकामौ च कामुकौ ।**
**अवधं युद्धनन्योन्यमाभासरसयोस्तयोः ।।**

यत्र मिश्रवृत्तं चतुरङ्कं त्रिसंधियुक्तं नियमतः नायकः तथा प्रतिनायकः धीरोद्धतमर्त्यः अथवा दिव्यो वा भवितुमर्हति । दिव्यां स्त्रियं हर्तुकामौ कामुकौ परस्परं युद्धं कुरुतः परं तत्र वधः न सम्भवति तत् भवति ईहामृगः ।

इत्थं श्रीविद्यानाथेन स्वीये ग्रन्थे प्रतापरुद्रिये काव्यरचनाप्रक्रियाः सुष्टप्रतिपादिताः ।

## ८.अमृतानन्दयोगिनोक्त काव्यरचनाप्रभेदाः

अमृतानन्दयोगिनः स्वीये ग्रन्थे अलङ्कारसङ्ग्रहे काव्यं नाम किं? तस्यभेदाः के? इति विस्तृतया विवृतवन्तः। यथा–

**अकारादिक्षकारान्तावर्णाः स्युः पदतां गताः।**
**पदानि द्विविधानि स्युः सुप्तिङ्न्तविभेदतः।।**
**सञ्चयास्तिङ्सुबन्तानां वाक्यान्याहुर्विपश्चितः।**
**तान्येन कविक्लृप्तानि सार्थानि सरसानि च।।**
**सालङ्काराणि निर्दोषाण्याहुः काव्यं विपश्चितः।।**

अकारादारभ्य क्षकारपर्यन्ताः वर्णाः पदत्वं प्रति गच्छन्ति। तान्येव पदानि सुबन्तं तिङ्न्तं इति द्विविधानि। तिङ् सुबन्तानां पदानां समूहः एव वाक्यं इत्युच्यते। तान्येव वाक्यानि यदा कविना क्लुप्तानि अर्थसहितानि, अलङ्कारयुक्तानि, दोषरहितानि प्रयुज्यन्ते तदेव काव्यमिति बुधानामभिप्रायः। तादृशं काव्यं त्रिधा विभज्यते। यथा–

**पद्यं गद्यं च मिश्रं च त्रिविधं काव्यमुच्यते।**
**पद्यं तु च्छन्दसा बद्धं गद्यं वाक्यकदम्बकम्।**
**पद्यगद्यात्मकं मिश्रं नाटकादिकमुच्यते।।**

पद्यं च्छन्दसा बद्धं भवति। वाक्यरूपेण यद्लिख्यते तत् गद्यमुच्यते। पद्यगद्यात्मकं काव्यं मिश्रमित्युच्यते। यथा नाटकादयः।

**सर्गबन्धं संस्कृतेन साश्वासं प्राकृतेन तु।**
**तत् द्वयं च महाकाव्यं सेतुरामायणदिकम्।।**

महाकाव्यं संस्कृते प्राकृते च भवति। संस्कृतेविद्यमान महाकाव्यं सर्गबन्धो भवति, तथैव प्राकृतेविद्यमानं महाकाव्यम् आश्वासरूपेण च विभज्यते।

**गद्यं तु गदितं द्वेधा कथा चाख्यायिकेति च।**
**कथा कल्पितवृत्तान्ता सत्यार्थाख्यायिका मता।।**

गद्यं द्विविधं भवति। **कथा, आख्यायिका** इति। कथायां इतिवृत्तं कल्पितवृत्तान्तं भवति। आख्यायिकायां तु सत्येतिवृत्तान्तं भवति। उभयत्रापि अर्थात् कथायां,

आख्यायिकायां च अध्यायविभागः उच्छवास, लम्बकरूपेण भवति। मिश्रकाव्ये तु अङ्करूपेण अध्यायविभागः भवति।

### ८.अ. अमृतानन्दयोगिना प्रोक्त रूपकाणि

अमृतानन्दयोगिनः स्वीयग्रन्थे अलङ्कारसंङ्ग्रहे नवमपरिच्छेदे दृश्यकाव्यभेदत्वेन रूपकाः दश प्रोक्ताः। यथा–

**नाटकं सप्रकरणं भाणः प्रहसनं डिमः।**
**व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति।।**

(१) नाटकम् (२) प्रकरणम् (३) भाणः
(४) प्रहसनम् (५) डिमः (६) व्यायोगः
(७) समवकारः (८) वीथी (९) अङ्कः
(१०) ईहामृगः

### ८.अ.१. नाटकलक्षणम्

**नाटकादेस्तथा संज्ञा सूत्रधारोप्यथामुखम्।**
**अर्थोपक्षेपकाः चतस्रो वृत्तयोऽपि च ।।**
**अर्थोपक्षेपकाः पञ्च चतस्रो वृत्तयोऽपि च।**
**नाट्योक्तिश्च समावेशस्तथा भाषाविभाषयोः।।**

सूत्रधारः नान्दीं प्रस्तावनां च कृत्वा निर्गच्छेत्। ततः इतिवृत्तं स्थापयेत्। कवेः गोत्रानुकीर्तनादिकं कुर्यात्। आमुखं नाटके भवेत्। पूर्वोक्ताः अर्थोपक्षेपकाः पञ्चापि भवेयुः, तथा चतस्रः वृत्तयः, नाट्योक्तिः, समावेशाः, विभिन्नभाषाप्रयोगाश्च भवेयुः।

**प्रख्यातवंशो राजन्यो दिव्यो वा यत्र नायकः।**
**तत्प्रख्यातं विधातव्यं वृत्तमत्राधिकारिकम्।।**
**यत्तत्रानुगतं किञ्चिन्नायकस्य रसस्य वा।**
**विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत्।।**
**यथा वालिवधस्त्यक्तश्छद्मनोदात्तराघवे।**
**कल्पिता वीरचरिते वधस्तस्यैव चाऽन्यथा।।**

नायकः प्रख्यातवंशीयः, दिव्यः वा, इतिवृत्तं प्रख्याताधिकारिकं च भवेत्। नायकस्य वा रसस्य वा विरुद्धं यत् किमपि वा भवतु तत् त्याज्यम्। अन्यथा तस्य कल्पना कार्या। उदात्तराघवे वालिवधस्य त्यागः कृत्वा वीरचरिते सैव विषयः अन्यथा प्रोक्तः।

**आद्यन्तमेवं निश्चित्य पञ्चधा तद्विभज्य च।**
**खण्डशः सन्धिसंज्ञांस्तान्भागानपि च खण्डयेत्।।**
**द्वित्रिद्वित्रिचतुर्युक्तदशसंख्यान्यनुक्रमात्।**
**चतुः षष्टिश्च तानि स्युरङ्गानि त्विह सन्धिषु।।**
**आदौ विष्कम्भकं कुर्यादङ्कं वा कार्ययुक्तितः।**
**अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम्।।**

आद्यन्तं पञ्चधा विभज्य खण्डशः पञ्चसन्धीनां खण्डना कार्या। नाटकस्यादौ विष्कम्भकं करणीयम्। तदनन्तरमेव नाटकस्य प्रारम्भः। तत्रापि नीरसंवस्तु यदस्ति तस्य परित्यागः कार्यः।

**यदा सन्दर्शयेच्छेषं कुर्याद्विष्कम्भकं तथा।**
**यदा तु सरसं वस्तु मूलादेव प्रवर्तते।।**
**आदावेव तदा कुर्यादामुखाक्षेपसंश्रयम्।**
**अनुभावविभावाभ्यां स्थायिनो व्यभिचारिभिः।।**
**गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम्।**
**न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत्।**
**रसं वा न तिरोदध्याद्वस्त्वलङ्कारलक्षणैः।**
**एको रसोऽङ्गी कर्तव्यो वीरः शृङ्गार एव वा।।**

नायकस्य चरितं प्रत्यक्षम्भवेत्। अङ्कः नानाप्रकारार्थसंविधान रसाश्रयः भवेत्। विभावानुभावव्यभिचारीभावैः गृहीतस्यङ्गिनः परिपोषणं करणीयम्। अतिरसप्रयोगेन वस्तुनः विच्छिन्नता न कार्या। वस्त्वलङ्कारलक्षणैः रसं न तिरोदध्यात्। नाटके शृङ्गारो वा वीरो वा एकः एव अङ्गिरसः भवितुमर्हति।

**अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम्।**
**दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम्।।**

**संरोधं भोजनं स्नानं सुरतं चानुलेपनम्।**
**अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ।।**
**नाधिकारिवधं क्वापि त्याज्यमावश्यकं न च।**
**एकाहचरितैकार्थां कुर्याच्चासन्ननायकम्।।**
**पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः।**
**एवमङ्काः प्रकर्तव्याः प्रवेशादिपुरस्कृताः।।**
**पञ्चाङ्गं च षडङ्कं च सप्ताङ्कं च तथाऽपरम्।**
**अष्टाङ्कं च नवाङ्कं च दशाङ्कं नाटकं विदुः।।**
**मारीचवञ्चनं नाम पञ्चाङ्कं परिकीर्तितम्।**
**वेणीसंहारसंज्ञं तु षडङ्कं नाटकं मतम्।।**
**शाकुन्तलं तु सप्ताङ्कमष्टाङ्कं नलविक्रमम्।**
**देवीपरिणयाख्यानं नवाङ्कं परिकीर्तितम्।।**
**बालरामायणं नाम दशाङ्कं नाटकं स्मृतम्।**

अन्ये रसाः सर्वेऽपि अङ्गरूपेण भवितव्याः। अन्तिमे विद्यमाननिर्वहणसन्धौ अवश्यम् अद्भुतरसं भवेत्। दूरादाह्वानं, वधं, युद्धं, राज्यदेशादि विप्लवं, संरोधं, भोजनं, स्नानं, सुरतं, अनुलेपनं, अम्बरग्रहणमित्यादयः प्रत्यक्षरूपेण न निर्दिशेत्।

अधिकारिणः मरणं कदापि न दर्शनीयम्। परं किं किं दर्शनीयं तत् सर्वं नाटके भवेत्।

**८.अ.२. प्रकरणलक्षणम्**

**अथप्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम्।।**
**अमात्यविप्रवणिजामेकं कुर्याच्च नायकम्।**
**धीरप्रशान्तं सापायं धर्मकामार्थतत्परम्।।**
**नायिका तु द्विधा नेतुः कुलस्त्री गणिका तथा।**
**क्वचिदेकैव कुलजा वेश्या क्वापि द्वयं क्वचित्।।**
**आभिः प्रकरणं त्रेधा शुद्धं स्यात्कुलजान्वितम्।।**
**सङ्कीर्णं वेश्यया युक्तं मिश्रं तद्द्वयसङ्गतम्।।**

प्रकरणे कल्पितेतिवृत्तम्भवेत्। तच्च लोके यद्भवितुमर्हति तादृशमपि भवेत्। नायकः अमात्यः, विप्रः, वणिक्, एतेषु एकः भवितुमर्हति। स च धीरप्रशान्तः, सापायः धर्मकामार्थतत्परश्च भवेत्।

नायिका तु द्वेधा भवितुमर्हति। कुलस्त्री वा वेश्या वा। कुत्रचिदेका एव भवति कुत्रचित् उभेऽपि। एवं नायिकाभिः प्रकरणं त्रिधा विभक्तम्। कुलजान्वितं शुद्धम् इति, वेश्यायुक्तं सङ्कीर्णमिति, द्वयसङ्गतं मिश्रमित्युच्यते। अन्यत् सर्वमपि नाटकवदेव भवति।

**८.अ.३. भाणलक्षणम्**

**भाणस्तु धूर्तचरितं स्वानुभूतं परेण वा।**
**यत्रोपवर्णयेदेको निपुणः पण्डितो विटः।।**
**सम्बोधनोक्तिप्रत्युक्तो कुर्यादाकाशभाषितैः।**
**सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यसंस्तवैः।**
**भूयसा भारतीवृत्तिरेकाङ्कं वस्तु कल्पितम्।।**
**मुखनिर्वहणे साङ्गे लास्याङ्गानि दशापि च।।**

भाणे इतिवृत्तं धूर्तचरितं स्यात्। तच्च स्वानुभूतं वा परेणानुभूतं वा स्यात्। सम्बोधना, उक्ती, प्रत्युक्तिरूपेण आकाशभाषितैः भाषणं स्यात्। एकस्य निपुणपण्डितस्य विटस्य चरितमुपवर्णयेत्। तत्र शौर्यसौभाग्य संस्तवाः वीरशृङ्गारादयाः रसाः सूचयेत्।

भारतीवृत्तिः अधिकतया भवेत्। एकाङ्कयुक्तं, कल्पितश्च भवेत्। मुखनिर्वहणसन्धयः अत्र भवेत्। लास्याङ्गानि दशापि भाणे भवेयुः।

**८.अ.४. प्रहसनलक्षणम्**

**अथप्रहसनं त्रेथा शुद्धवैकृतसङ्करैः।**
**पाषण्डविप्रप्रभृतिचेटचेटीविटाकुलम्।।**
**चेष्टितं वेषभाषादिशुद्धं हास्यवचोन्वितम्।**
**कामुकादिवचोवेषैः षण्डकञ्चुकितापसैः।।**
**विकृतं सङ्कराद्वीथ्या सङ्कीर्णं धूर्तसङ्कुलम्।**

**रौद्रबीभत्सरहिता रसाः स्युर्हास्य एव वा ।।**
**भाणवत्सन्धिलास्याङ्गान्येकाङ्कं द्व्यङ्कमेव वा ।।**

प्रहसनं त्रेधा भवति । शुद्धम्, वैकृतम्, सङ्करमिति । अत्र पात्राणि पाषण्डाः, विप्राः, चेटाः, चेट्यः, विटाः भवितुमर्हन्ति । उपर्युक्तस्ववेषभाषादिभिः, वचसा च हास्यं जनयन्ति तर्हि तत् शुद्धं प्रहसनं भवति ।

ते एव कामुकादिवचो वेषैः हासं जनयन्ति तत् विकृतं प्रहसनं भवति । यदि धूर्तमात्राणि भवन्ति तर्हि तत् सङ्कीर्णं प्रहसनं भवति । प्रहसने रौद्रबीभत्सरसाः न भवेयुः । हास्यमङ्गिरसः भवेत् । एकाङ्कं वा अङ्कद्वयं वा भवितुं शक्नोति । भाणवत् सन्धयः लास्याङ्गानि च भवेयुः ।

**८.अ.५. डिमलक्षणम्**

**डिमे वस्तु प्रसिद्धं स्याद्वृत्तयः कैशिकीं विना ।।**
**नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः ।**
**मृतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ।।**
**रसैर्हास्यशृङ्गारशान्तैः षड्भिः समन्वितः ।**
**मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।।**
**चन्द्रसूर्योपरागैश्च न्याय्ये रौद्ररसेऽङ्गिनि ।**
**चतुरङ्कश्चतुःसान्धिर्निर्विमर्शो डिमः स्मृतः ।।**
**इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम् ।**
**ततस्त्रिपुरदाहश्च डिमसञ्ज्ञः प्रयोजितः ।।**

डिमे इतिवृत्तं प्रसिद्धं भवेत् । कैशिकीवृत्तिं विना इतरे वृत्तयः अत्र भवेयुः । डिमे षोड्शोद्धतनायकाः भवेयुः । यथा–देवगन्धर्वयक्षरक्षोमहोरगाः मृतप्रेतपिशाचादयः । हास्य–शृङ्गार–शान्तरसान् त्यक्त्वा इतरे षड्रसाः अत्र भवेयुः । माया–इन्द्रजालः–सङ्ग्राम–क्रोध–उद्भ्रान्तादि चेष्टाः भवेयुः । चन्द्रग्रहणं सूर्यग्रहणं इत्यादयः अत्र भवितुमर्हन्ति । रौद्रः अङ्गिरसः । अत्र चतुरङ्काः चत्रसः च सन्धयः, विमर्शसन्धिं त्यक्त्वा भवितव्याः । ब्रह्मणा त्रिपुरदाहः प्रोक्तः । सः त्रिपुरदाहः डिमः भवति ।

**८.अ.६. व्यायोगलक्षणम्**

**ख्यातेतिवृत्तो व्यायोगः ख्यातोद्धतनराश्रयः।**
**हीनो गर्भावमर्शाभ्यां दीप्ताः स्युर्डिमवद्रसाः॥**
**अस्त्रीनिमित्तसङ्ग्रामो जामदग्न्यजयो यथा।**
**एकाहचरितैकाङ्को व्यायोगो बहुभिर्नरैः॥**

प्रख्यातेतिवृत्तं व्योयोगे भवेत्। प्रख्यातः उद्धतनायकः भवेत्। गर्भविमर्शसन्धिहीनः डिमवत् रसाः अत्र दीप्ताः भवेयुः। स्त्रीनिमित्तं युद्धं न भवेत्। यथा जामदग्न्यजयः। एकस्यैव दिनस्य चरितः ,एकाङ्कः ,बहूनां नराणां स्थितिः अत्र भवेयुः।

**८.अ.७. समवकारलक्षणम्**

**कार्यं समवकारेऽपि चामुखं नाटकादिवत्।**
**ख्यातं देवासुरं वस्तु निर्विमर्शास्तु सन्धयः॥**
**वृत्तयो हीनकैशिक्यो नेतारो देवदानवाः।**
**द्वादशोद्धतविख्याताः फलं तेषां पृथक् पृथक्॥**
**अङ्गी वीरोऽङ्गानि चान्ये यद्वदम्भोधिमन्थने।**
**अङ्कैस्त्रिभिस्त्रिकपटस्त्रिशृङ्गारस्त्रिविद्रवः॥**

समवकारेऽपि आमुखं नाटकादिवदेव भवेत्। इतिवृत्तं प्रसिद्धं ,देवासुरसम्बन्धं च भवेत्। विमर्शसन्धिं त्यक्त्वा इतरे सन्धयः भवेयुः। कैशिकीं विना वृत्तयः अत्र भवेयुः। नायकः देवः दानवः, तेश्च उद्धताः प्रसिद्धाश्च भवेयुः। अत्र द्वादशनायकाः, सर्वेषां पृथक् पृथक् प्रयोजनान्यपि भवेयुः। अङ्गीरसः वीरः भवति। अत्र त्रयः अङ्काः भवेयुः। त्रिशृङ्गार, त्रिकपट, त्रिविद्रवाः इति।

**द्विसन्धिरङ्कः प्रथमः कार्यो द्वादशनाडिकः।**
**चतुर्द्विनाडिकावन्त्यौ नाडिका घटिकाद्वयम्॥**
**वस्तुस्वभावदैवारिकृताः स्युः कपटास्त्रयाः।**
**धर्मार्थकामैः शृङ्गारो नात्र बिन्दुप्रवेशकौ॥**

प्रथमेऽङ्के सन्धिद्वयं द्वादश नाडिकाः, द्वितीये तृतीये च चतुर्द्विनाडिका च भवेयुः। राक्षसकृताः कपटाः, धर्मार्थकामैः शृङ्गारोत्र भवेयुः। बिन्दुप्रवेशकौ नात्र भवेताम्।

**व्राताद्युज्ज्वलता शौचं धर्मशृङ्गार उच्यते।**
**मुक्तारत्नाद्यलङ्कारैरर्थशृङ्गार उच्यते।।**
**सम्भोगविप्रलम्भादिः कामशृङ्गार इत्ययम्।**
**पुरावरोधयुद्धे भवाताग्न्यादिकविद्रवाः।।**
**वीथ्यङ्गानि यथालाभं कुर्यात्प्रहसने यथा।।**

व्रतादि उज्ज्वलता, शौचं, धर्मशृङ्गारः, मुक्तारत्नाद्यलङ्कारैः अर्थशृङ्गारः, सम्मोगविप्रलम्भादिभिः कामशृङ्गारश्च भवति। अन्तःपुरावरोधः,युद्धः, अग्न्यादिकोपद्रवाः अत्र भवन्ति। वीथ्यङ्गानि प्रहसने यथा विद्यते तथा यथालाभं कुर्यात्।

**८.अ.८. वीथीलक्षणम्**

**वीथी तु कैशिकिवृत्तौ सन्ध्यङ्गाङ्काश्च भाणवत्।**
**रसः सूच्यस्तु शृङ्गारः स्पृशेदपि रसान्तरम्।।**
**नायिकानायकौ कार्यौ शृङ्गारद्वयसंश्रयौ।**

वीथ्यां कैशिकीवृत्तिः, सन्ध्यङ्काः भाणवत् भवेयुः। शृङ्गारः सूच्यः भवेत्। अन्ये च रसाः अपि स्पृशेत्। नायिकानायकौ सम्भोगशृङ्गार, विप्रलम्भशृङ्गारयुक्तौ भवेताम्।

**८.अ.९. अङ्कलक्षणम्**

**उत्सृष्टिकाङ्के प्रख्यातं वृत्तं बुद्धया प्रपञ्चयेत्।**
**रसस्तु करुणः स्थायी नेतारः प्राकृता नराः।**
**भाणवत्सन्धिवृत्यङ्गैर्युक्ता स्त्रीपरिदेवितैः।।**
**वाचा युद्धं विधातव्यं तथा जयपराजयौ।।**

अङ्केतिवृत्तं प्रख्यातं स्यात्। तच्च वृत्तं स्वबुद्धया प्रपञ्चयेत्। रसः करुणरसः प्राकृतनरः नायकः भवेत्। भाणवत् सन्धिवृत्तयादयः भवेयुः। स्त्रीपरिदेवितैः वाचा युद्धं कुर्यात्। तथा तेन युद्धेनैव जयपराजयौ ज्ञातव्यौ।

**८.अ.१०. ईहामृगलक्षणम्**

**मिश्रमीहामृगे वस्तु चतुरङ्कः त्रिसन्धिमत् ।।**
**नरदिव्यावनियमान्नायकप्रतिनायकौ ।**
**ख्यातौ धीरोद्धतावन्त्यो विपर्यासादयुक्तकृत् ।।**
**दिव्यास्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।**
**शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत् ।**
**संरम्भं परमानीय युद्धं व्याजान्निवारयेत् ।**
**वधं प्राप्तस्य कुर्वीत परं नैव महात्मनः ।।**
**कैशिकीवृत्तिरहितो हास्यशृङ्गारवर्जितः ।**
**अत्र षण्णायकानन्ये वदन्तीहामृगे नरान् ।।**

ईहामृगेतिवृत्तं मिश्रं भवति। चतुरङ्काः, त्रिसन्धयश्च भवन्ति। नायकः नरः वा दिव्यः वा भवति। प्रतिनायकः अपि तथैव। तौ द्वावपि प्रसिद्धौ भवतः। प्रतिनायकः धीरोद्धतः, अनिच्छन्तीं दिव्यस्त्रियम् अपहरन्ति। शृङ्गाराभासः अत्र किञ्चित् किञ्चित् प्रदर्शयेत्। किञ्चित् संरम्भमानेतव्यम्। परं युद्धं व्याजान्निवारयेत्। प्रतिनायकस्य वधः कार्यः। नैव नायकस्य। कैशिकीवृत्तिरिहतः, हास्यशृङ्गारौ न भवेताम्। अत्र षण्णायकाः अन्ये भवितव्याः। इति अत्र रूपकाणां विषये अमृतानन्दयोगिनां विचारः कृतः।

**८.आ. अमृतानन्दयोगिनां मतानुसारमुपरूपकाणि**

**नाटिका सट्टकं त्रोटो प्रेङ्खणं गोष्टिभाणिके ।**
**सल्लापकश्च प्रस्थानं काव्यहल्लीसरासके ।**
**श्रीगदितं च लासिका दुर्मल्ली नाट्यरासकम् ।।**
**उल्लाप्यमुपरूपाणि भवन्त्येतानि षोडश ।**
**प्रकृतित्वादथान्येषां भूयो रसपरिग्रहात् ।।**

अमृतानन्दयोगिनां मतानुसारेण षोडशोपरूपकाणि सन्ति। यथा–

(१) नाटिका (२) सट्टकम् (३) त्रोटकम् (४) प्रेङ्खणम्
(५) गोष्ठी (६) भाणिका (७) सल्लापः (८) प्रस्थानम्

(९) काव्यम्  (१०) हल्लीसकम्  (११) रासकम्  (१२) श्रीगदितम्
(१३) लासिका (१४) दुर्मल्ली  (१५) नाट्यरासकम्  (१६) उल्लाप्यम्

### ८.आ.१. नाटिकालक्षणम्

**लक्ष्यते नाटिकाप्यत्र मिश्रवस्तुसमाश्रया।**
**तत्र वस्तु प्रकरणान्नाटकान्नायको नृपः ।।**
**प्रख्यातो धीरललितः शृङ्गारोऽङ्गी सलक्षणः।**
**देवी तत्र भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ।।**
**गम्भीरा मानिनी कृच्छ्रात्तद्वशान्नेतृसङ्गमः।**
**नायिका तादृशी मुग्धा दिव्या वाऽतिमनोहरा ।।**
**अन्तः पुरादिसम्बन्धादासन्ना श्रुतिदर्शनैः।**
**अनुरागो नवावस्थो नेतुस्तस्यां यथोत्तरम् ।।**
**नेता तत्र प्रवर्तेता देवीत्रासेन शङ्कितः।**
**कैशिक्यङ्गैश्चतुर्भिश्च युक्ताङ्कैरिति नाटिकाः ।।**

नाटिकायां वस्तु मिश्रं भवेत्। नायकः प्रख्यातवंशीयः, धीरललितः, नृपवंशजः भवेत्। शृङ्गारः अङ्गीरसः। अत्र देवी ज्येष्ठा, प्रगल्भा नृपवंशजा, गम्भीरा मानिनी, नायकसङ्गमार्थमागता, मुग्धा, दिव्या, अतिमनोहरा वा भवति।

सा अन्तःपुरसम्बन्धेन समागता भवति। नायकस्य विषये दृष्ट्वा वा श्रुत्वा वा अनुरागोभूत्वा नवावस्थायां नायकेन सह समागता भवति। नायकस्तावत् ज्येष्ठभार्यायाः सकाशात् किञ्चित् भीतः भवेत्। अथवा किञ्चिदिव शङ्कितः भवेत्। नाटिकायां कैशिकीवृत्तिः भवति। चत्वारः अङ्काः भवेयुः।

### ८.आ.२. सट्टकलक्षणम्

**सट्टकं नाटिकावत्स्यात् किन्त्वेतत् प्राकृतैः कृतम्।**
**प्रवेशकविहीनं च शृङ्गाराद्भुतभूषितम् ।।**
**चतुर्यवनिकं कार्यं वयस्यन्तं प्रकीर्तितम् ।।**

सट्टकं नाटिकावत् स्यात्। परन्तु एतत् प्राकृतैः जनैः कृतम् , प्रवेशकहीनं, शृङ्गाराद्भुतभूषितं च भवति सट्टकम्। यवनिका चतुष्टयं कार्यम्।

**८.आ.३. त्रोटकलक्षणम्**

> **दिव्यमानुषसंयोगो यत्राङ्केऽङ्के विदूषकः।**
> **त्रोटकं नाम तज्ज्ञेयं गूढनाटकलक्षणम्।**
> **सप्ताष्टनवपञ्चाङ्कमन्यन्नाटकवन्मतम्।।**
> **सप्ताङ्कं स्तम्भितारम्भस्त्वष्टाङ्कं मदलेखिका।**
> **मेनकानहुषाख्यं स्यान्नवाङ्कं परिकीर्तितम्।।**
> **प्रकीर्त्यते परं प्राज्ञैः पञ्चाङ्कं विक्रमोर्वशी।**

त्रोटके दिव्यमानुषसंयोगः भवति। प्रत्येकस्मिन्नङ्केऽपि विदूषकः भवति। गूढनाटकलक्षणयुक्तं भवति। ७-७-९-५ अङ्काः अत्र भवन्ति। अन्यत् सर्वमपि नाटकवदेव भवति। उदाहरणार्थं सप्ताङ्कां स्तम्भितारम्भे, अष्टाङ्काः मदलेखिकायां, नवाङ्काः मेनकानहुषे तथा पञ्चाङ्काः विक्रमोर्वशीय रूपके च द्रष्टुं शक्यन्ते इति प्राज्ञैः प्रकीर्त्यते।

**८.आ.४. प्रेङ्खणलक्षणम्**

> **गर्भावमर्शहीनं वा मुखनिर्वहणान्वितम्।।**
> **सूत्रधारविहीनं च सर्ववृत्तिसमन्वितम्।**
> **नियुद्धसंफेटयुतं परिवर्तकभूषितम्।।**
> **मागधी शौरसेनी वा हीननायकचेष्टितम्।**
> **नेपथ्ये गीतनाट्यं च तथा तत्र प्ररोचना।।**
> **अप्रवेशकविष्कम्भमेकाङ्कं प्रेङ्खणं विदुः।**
> **निर्दर्शनमिह ज्ञेयं वस्तु वालिवधादिकम्।।**

प्रेङ्खणेतावत् गर्भविमर्शसन्धी न परं मुखनिर्वहणौ भवतः। सूत्रधारः विहीनम् , मागधी, शौरसेनी युक्तं, नायकचेष्टा विहीनम्,। नेपथ्ये गीतनाट्यादियुक्तं, प्ररोचना युक्तं च भवति प्रेङ्खणम्। प्रवेशकविष्कम्भौ प्रेङ्खणे न भवतः। अस्मिन् एकः एव अङ्कः भवति। प्रेङ्खणस्य उदाहरणत्वेन वालिवधः स्वीकर्तुं शक्यते इति।

**८.आ.४. गोष्ठीलक्षणम्**

> **अथ गोष्ठी मतैकाङ्का कैशिकीवृत्तिशालिनी।**
> **कामशृङ्गारयुक्ता पञ्चषड्योषिदान्विता।।**

**प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलङ्कृता ।**
**गर्भावमर्शसन्धिभ्यां शून्या नोदात्त वाक्कृता ।।**
**निदर्शनं रैवतमदनिकाख्यमिहोदितम् ।**

गोष्ठ्यां एकाङ्कः, कैशिकीवृत्तिश्च भवति । कामशङ्गारयुक्ता भवति गोष्ठी । पञ्च वा षड् वा स्त्रीजनाः अत्र भवन्ति । प्राकृतैः नव वा दश वा जनौः अलङ्कृता भवति गोष्ठी । गर्भावमर्शसन्धीअत्र न भवतः । उदात्तवाचः अत्र न भवन्ति । उदाहरणं रैवतमदनिका भवति ।

**८.आ.६. भाणिकालक्षणम्**

**अथ स्याद्भाणिकोदात्तनायिकैकाङ्कभूषिता ।।**
**श्लक्ष्णनेपथ्यभाङ्गध्यपुरुषा च प्रकीर्तिता ।**
**कैशिकीभारतीप्राया त्वङ्गैः सप्तभिरुज्वला ।।**
**उपव्यासोऽथ विन्यासो विबोधः साध्वसं तथा ।**
**समर्पणं चानुवृत्तिः संहरश्चापि सप्तमः ।।**
**प्रसङ्गात्कार्यकथनमुपन्यासः प्रकीर्तितः ।**
**निर्वेदवाक्यव्युत्पत्तिस्तत्र विन्यास उच्यते ।**
**विबोधो भ्रान्तिनाशः स्यान्मिथ्याज्ञानं तु साध्वसम् ।**
**समर्पणमुपालम्भवचः स्यात्कोपविद्धया ।।**
**अनुवृत्तिर्निदर्शनस्योपन्यासः प्रकीर्तितः ।**
**समापनं तु कार्यस्य संहार इति कीर्तितः ।**
**मुखनिर्वहणोपेता कामदत्ता निदर्शनम् ।।**

भाणिकोदात्तनायिकायुक्ता एकाङ्कभूषिता, कैशिकीभारतीवृत्तियुक्ता, सप्ताङ्गयुक्ता यथा– उपन्यासः, विन्यासः, विबोधः, साध्वसम्, समर्पणं, अनुवृत्तिः, संहरयुक्तं च भवति ।

तत्र प्रसङ्गरूपेण कार्यकथनमुपन्यासः इत्युच्यते । निर्वेदवाक्यव्युत्पत्तिः विन्यासः इति, विबोधः, भ्रान्तिनाशः मिथ्याज्ञानं साध्वसं भवति । उपलम्भवचः कोपेन यद्भवति तत् समर्पणम्, निदर्शनस्यनुवृत्तिः उपन्यासः कार्यस्य समापनं संहारः, मुखनिर्वहणोपेता निदर्शनम् यथा कामदत्ता इति च सप्ताङ्गानां लक्षणमत्रोक्तम् ।

**८.आ.७. सल्लापलक्षणम्**

**शृङ्गारहास्यरहितः संलाप इति कीर्तितः ।।**
**पुरोपरोधसङ्ग्रामविद्रवैः कपटैर्युतः ।**
**कैशिकीभारतीहिनो भवेत्पाषण्डनायकः ।।**
**हीनोपनायकयुतः श्मशानादिसमाकुलः ।**
**सप्तविंशतिरङ्गानि भवन्त्यस्य यथोच्यते ।।**
**उत्कण्ठा चावहित्था च प्रयत्नो ग्रथनं तथा ।**
**आशंसा तर्कसन्देहतापोद्वेगाश्च मुग्धता ।।**
**आलस्यं प्रतिपत्तिश्च विलापो वाक्यमेव च ।**
**साधनानुगमोच्छ्वासविस्मयाश्च चमत्कृतिः ।।**
**विस्मृतिर्लोभसम्फेटौ वैशारद्यं प्रबोधनम् ।**
**आश्वासश्च प्रहर्षश्च प्रसत्तिरिति कीर्तिताः ।।**
**सलक्षणोदाहरणं व्यक्तत्वान्नात्र दर्शितम् ।**
**शेषं नाटकवत्सर्वं संलापः समुदाहृतः ।।**
**निदर्शनं कनकवतीमाधवं समवेक्ष्यताम् ।।**

शृङ्गारहास्यरहितः संलापः । अन्तःपुर विषयाः युद्धः कापट्यादयः अत्र भवन्ति । कैशिकीभारतीहीनः भवति । पाषण्डः नायकः, उपनायकहीनः, श्मशानसम्बन्धं किञ्चित् दर्शयन्ति । सप्तविंशति अङ्गानि अत्र भवन्ति । यथा– उत्कण्ठा, अविहित्था, प्रयत्नः, ग्रथनं, आशंसा, तर्कसन्देह, तापोद्वेगः, मुग्धता, आलस्यं, प्रतिपात्तिः, विलापः, वाक्यम्, साधनानुगमः उच्छ्वासः, विस्मयः, चमत्कृतिः, विस्मृतिः, लोभसम्फेटौ, वैशारद्यं, प्रबोधनं, आश्वासः, प्रहर्षः, प्रसत्विः इति। शेषं सर्वं नाटकवत् भवति । अस्योदाहरणं भवति कनकवतीमाधवम् ।

**८.आ.८. प्रस्थानलक्षणम्**

**दासादिनायकं दासीनायिकां द्व्यङ्कमीरितम् ।।**
**कैशिकीवृत्तिबहुलम् बहुताललयान्वितम् ।**
**सुरापानसमायुक्तं तथा हीनोपनायकम् ।।**
**विलासेद्वेष्टसंक्षिप्तं प्रस्थानमिति कीर्तितम् ।**
**निदर्शनमिह ज्ञेयं शृङ्गारतिलकाह्वयम् ।।**

अस्मिन् दासादयः नायकाः, नायिका दासी च भवति । प्रस्थाने द्वौ अङ्कौ भवतः ।ताललयान्वितं, कैशिकीवृत्तिबहुलं च भवति प्रस्थानम् ।

सुरापानादयः अधिकतया प्रस्थाने भवति। उपनायकः नः भवति। विलासादिक बहुदर्शितं भवति। एतादृशस्य प्रस्थानस्य उदाहरणत्वेन शृङ्गारतिलकं स्वीकर्तुं शक्यते।

**८.आ.९. काव्यलक्षणम्**

**काव्यमारभटिहीनमेकाङ्कं हास्यसङ्कुलम्।**
**गर्भावमर्शसन्धिभ्यां हीनं शृङ्गारभूषितम्।।**
**खण्डमात्राद्विपदिकाभग्नतालैरलङ्कृतम्।**
**उदात्तोक्तिसमायुक्तं बहुताललयान्वितम्।।**
**निदर्शनं तु काव्यस्य विज्ञेयो यादवोदयोः।**

काव्यमारभटीहिनं, एकाङ्कयुक्तं, हास्यसङ्कुलं, गर्भावमर्शसन्धिभ्यां हीनम्, शृङ्गारभूषितं च भवति काव्यम्।

काव्यमुदात्तोक्तिसमायुक्तं बहुताललयान्वितं भवति। अस्य उदाहरणं भवति यादवोदयः।

**८.आ.१०. हल्लीसकलक्षणम्**

**हल्लीसकं तु सप्ताष्टदशस्त्रीजनसङ्कुलम्।।**
**सम्प्रयोज्यैकपुरुषं कैशिकीवृत्तिभूषितम्।**
**एकाङ्कं स्यादुदात्तोक्तिबहुताललयात्मकम्।।**
**निदर्शनं भवेदस्य केलिरैवतकं मतम्।।**

हल्लीसकं ७,८, अथवा १० स्त्रीजनयुक्तं भवति। एकः एव पुरषः भवति हल्लीसके। कैशिकीवृत्या अलङ्कृतं , एकः एवाऽङ्कः, बहुताललयात्मकं च भवति हल्लीसकम् । अस्य उदाहरणं भवति केलिरैवतकम्।

**८.आ.११. रासकलक्षणम्**

**अथ रासकमेकाङ्कं सूत्रधारेण वर्णितम्।**
**सुश्लिष्टनान्दीसहितं पञ्चपात्रं द्विसन्धिकम्।**

**पूर्णं भाषाविभूषाद्यैर्भारतीकैशिकीयुतम् ।।**
**वीथ्यङ्कमण्डितं मुख्यनायकं ख्यातनायकम् ।**
**उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम् ।।**
**गर्भावमर्शशून्यं च यथा स्यान्मेनकाद्विजम् ।।**

रासके एकः एवाङ्कः भवति। सूत्रधारः अत्र न भवति। सुश्लिष्टनान्दी, पञ्चपात्राणि, सन्धिद्वयं च भवति। रासकं भाषाभिः, विभूषादिभिश्च पूर्णं भवति। भारती वृत्तिः कैशिकीवृत्तिश्च अत्र भवतः।

वीथ्यङ्गानि अत्र भवन्ति। मुख्यः, प्रख्यातश्च भवति नायकः। उदात्तरूपे भावविन्यासेन रासकमुत्तरोत्तरं चलति। अत्र गर्भविमर्शसन्धी न भवतः। अस्योदाहरणं भवति मेनकाद्विजम्।

**८.आ.१२. श्रीगदितलक्षणम्**

**करुणं स्त्री समासीना गायेद्यत्र पठेदपि ।।**
**एकाङ्कं भारतीप्रायं तच्छ्रीगदितमुच्यते ।**
**गर्भावमर्शरहितं प्रख्यादोत्तनायकम् ।।**
**प्रसिद्धनायकं ज्ञेयं यद्वत्क्रीडारसालकम् ।।**

एका स्त्री आगत्य करुणरसयुक्तं किमपि पठति अथवा गायति श्रीगदिते। एकाङ्कयुक्त भारतीवृत्तिरत्र भवति। गर्भावमर्शसन्धी न भवतः। प्रख्यातोदात्तः, प्रसिद्धः भवति नायकः। अस्य श्रीगदितस्य उदाहरणं भवति क्रीडारसालकम्।

**८.आ.१३. लासिकालक्षणम्**

**शृङ्गारबहुलैकाङ्का त्रिसन्धिर्न्यूननायिका ।**
**स्वल्पनृत्ताल्पनेपथ्या पीठमर्देन भूषिता ।**
**विदूषकविटोपेता दशलास्याङ्गभूषिता ।।**
**लासिका सा समुद्दिष्टा यथा वीणावती मता ।**

शृङ्गारबहुला लासिका, सन्धित्रय, न्यूननायिका, स्वल्पनृत्तं, पीठमर्देन भूषिता, विदूषकविटोपेता, दशलास्याङ्गभूषिता च भवति लासिका।

अस्य उदाहरणत्वेन वीणावती इति उपरूपकं स्वीकर्तुं शक्यते।

**८.आ.१४. दुर्मल्लीलक्षणम्**

**दुर्मल्ली चतुरङ्का स्यात्कैशिकीभारतीयुता ।।**
**विगर्भा नागरनरा न्यूननायकभूषिता ।**
**त्रिनाडिः प्रथमोऽङ्कोऽस्यां विटक्रीडामयो भवेत् ।।**
**द्वितीयः पञ्चनाडीः स्यात् विदूषकविलासवान् ।**
**षण्णाडिस्तृतीयः स्यात्पोटमर्दविलासवान् ।।**
**चतुर्थो दशनाडिः स्यादङ्कः क्रीडितनागरः ।**
**निदर्शनं भवेदत्र यथा बिन्दुमती मता ।।**

चतुरङ्का, कैशिकीभारतीवृत्ती भवतः दुर्मल्लिकायाम् । गर्भसन्धिहीना, नागरनराः, न्यूननायकभूषिता भवति दुर्मल्ली। प्रथमेऽङ्के त्रिनाडी भवति। तच्च विटक्रिडामयो भवेत्। द्वितीयाऽङ्के पञ्चनाडी, विदूषकीवलसवान् भवति। तृतीयोऽङ्क षण्णाडी, पीठमर्दनविलासवान् भवति। चतुर्थोऽङ्के दशनाडी, क्रीडितनागरः भवन्ति। अस्य उदाहरणं भवति बिन्दुमती।

**८.आ.१५. नाट्यरासकलक्षणम्**

**नाट्यरासकमेकाङ्कं बहुताललयात्मकम् ।**
**हास्यशृङ्गारसंयुक्तं दशलास्याङ्गभूषितम् ।।**
**उदात्तनायकं चैव पीठमर्दोपनायकम् ।**
**द्वितीयसन्धिशून्यं स्याद्वासकसज्जात्र नायिका ।।**
**निदर्शनं दर्शनीयं स्याद्विलासवती यथा ।**

नाट्यरासकमेकाङ्कं, बहुताललयात्मकं, हास्यशृङ्गारसंयुक्तं , दशलास्याङ्गभूषितं च भवति। उदात्तनायकः, पीठमर्दोपनायकः अत्र भवति। प्रतिमुखसन्धिः अत्र न भवति। वासकसज्जिकात्र नायिका भवति।

अस्य उदाहरणत्वेन विलासवती इति उपरूपकं स्वीकर्तुं शक्यते।

**८.आ.१६. उल्लाप्यलक्षणम्**

**उल्लाप्यं दिव्यचरितं मुखनिर्वहणान्वितम् ।**
**शृङ्गारहास्यकारुण्ययुतमेकाङ्कभूषितम् ।।**
**बहुपुरस्तं गीतमयं चतुरोज्ज्वलनायकम् ।।**

**नाट्यप्रबन्धनिकुरुम्बमिदं विभाति।**
**दानं त्वदीयमिव मन्यधरातलेन्द्र ॥**

उल्लाप्ये तावत् दिव्यानां चरितं, मुखनिर्वहणसन्धिद्वयं, शृङ्गारः, हास्यः, करुणश्च अत्र दर्शयति। एकैकाङ्कं, गीतमयं, चतुरोज्ज्वलनायकयुक्तं भवति उल्लाप्यम्।

इत्येवं प्रकारेण उपरूपकाणि अमृतानन्दयोगिनाप्रोक्ताः।

### इ. चाटुप्रबन्धाः

रूपकाणामुपरूपकाणां विषये उक्त्वा चाटुप्रबन्धानां लक्षणमुक्तमेकादशे परिच्छेदे अमृतानन्दयोगिना। यथा–

**अथ चाटुप्रबन्धानां लक्षणं कथ्यतेऽधुना। प्रबन्धो** नाम काव्यमित्यर्थः। **चाटु** नाम राज्ञां गुणगणकीर्तनोपयोगिनः पदजालाः इत्यर्थः।

अस्मिन् ग्रन्थे पद्यकाव्यानि गद्यकाव्यानि, गद्यपद्योभयमयकाव्यानि इति काव्यान् विभज्य, तेषां लक्षणान् निबन्धात्मकरूपेणामृतानन्दयोगिनः लिखितवन्तः। तत्र पद्यान्तर्गतानां चाटुप्रबन्धानां लक्षणं प्रोक्तं यथ–

**मुक्तकं पद्यमेकं स्याद्विकं पद्यद्वयं मतम् ॥**
**त्रिकं त्रयेण पद्यानां पञ्चतत्वानि पञ्चकम्।**
**अष्टकं गजमाला स्यान्नवकं रत्नमालिका ॥**
**दशभिर्दशकंप्रोक्तं द्वादशेन्दुकला मता।**
**सप्तविंशति पद्यानि नाम्ना तारावली मता ॥**
**त्रिंशता त्रिंशिका पञ्चाशता पञ्चाशिकेष्यते।**
**शतेन शतकं प्रोक्तमष्टोत्तरशतं परम् ॥**

(१) मुक्तकम् (२) द्विकम् (३) त्रिकम्
(४) पञ्चकम् (५) गजमाला (६) रत्नमालिका
(७) दशकम् (८) इन्दुकला (९) तारावली
(१०) त्रिंशिका (११) शतकम् (१२) अष्टोत्तरशतम्

१. एकं पद्यं यत्र भवति तद्भवति मुक्तकम्।
२. पद्यद्वयं यत्र भवति तद्भवति द्विकम्।
३. पद्यत्रयं यत्र भवति तद्भवति त्रिकम्।

४. पद्यपञ्चकं यत्र भवति तद्भवति पञ्चकम्।

५. पद्याष्टकं यत्र भवति तद्भवति गजमाला ।

६. पद्यनवकम् यत्र भवति तद्भवति रत्नमालिका।

७. दशपद्यानि यत्र भवन्ति तद्भवति दशकम्।

८. द्वादशपद्यानि यत्र भवन्ति तद्भवति इन्दुकला।

९. सत्तविंशति यत्र भवन्ति तद्भवति तारावली।

१०. त्रिंशत् पद्यानि यत्र भवन्ति तद्भवति त्रिंशका।

११. पञ्चाशत् पद्यानि यत्र भवन्ति तद्भवति शतकम्।

१२. अष्टोत्तरशतपद्यानि यत्र भवन्ति तद्भवति अष्टोत्तरशतम्।

**वृत्तैरभिन्नैर्भिन्नैर्वा कार्यमेकं यथारुचि।**
**काव्यमप्येकसर्गादि द्वात्रिंशदवधिस्मृतम्।।**

उपर्युक्ताः मुक्तकादिप्रबन्धाः एकस्मिन्नैव वृत्ते भवितुमर्हन्ति। अथवा भिन्नभिन्न वृत्तेष्वपि रचयितुं शक्यन्ते। काव्यमपि एकसर्गादारभ्य द्वात्रिंशत् सर्गपर्यन्तं भवितुमर्हति।

**अथोदाहरणादीनां लक्षणं कथ्यतेऽधुना।**
**कल्पनीयानि पद्यानि सप्त सप्तविभक्तिभिः।।**

अथोदाहरणादीनां लक्षणं कथ्यते। तत्र विभक्तीनां प्रामुख्यं विद्यते। अस्मिन् सप्तपद्यानि सप्तसु विभक्तिषु भवन्ति। अर्थात् एकैकमपि पद्यं एकैकस्मिन् विभक्तौ भवति।

**सम्बोधनात्मिका चान्ते विभक्तेष्वष्टमी भवेत्।**
**शक्करीप्रभृतीनि स्युश्छन्दांस्यस्य यथा रुचि।।**

अन्तिममष्टमं पद्यं सम्बोधना विभक्तौ भवति। कविना यथारुचि शक्करी प्रभृतीनि च्छन्दांसि उपयुज्यन्ते।

**रीतिः प्रधाना गौडीया गतिः स्याद्दतमध्यमा।**
**ओजः प्रसाधनाशब्दाः सानुप्रासाः क्वचित्क्वचित्।।**

गौडी प्रधाना रीतिः । ओजगुणेनालङ्कृतशब्दार्थवृत्तसहितं भवेत्। तत्र अनुप्राससहितं च भवेत् शब्दालङ्काराः।

**विभक्तिघटना चात्र यथाकामं क्रमेण वा।**
**तत्राद्यं मालिनीवृत्तं जयेत्यादिसमन्वितम् ।।**

विभक्तीनां घटना क्रमेण प्रथमाविभक्तिरारभ्य भवितुमर्हन्ति। अथवाष्टकेषु प्रथमपद्यं मालिनीवृत्ते भवेत्। "जय" "जयति" इत्यदिना शब्देनारम्भः भवेत्।

**गद्यात्मकदलान्यष्टौ प्रत्येकं सयतीनि च।**
**ततः सत्कलिका कार्या समस्ताब्धिपदात्मिका।**
**अन्तेतूत्कलिका कार्या समस्तैकपदात्मिका ।।**

समयतीनि गद्यात्मकानि अष्टौदलानि प्रत्येकं भवन्ति। ततः समस्ताब्धिपदात्मिका सत्कलिका कार्या । अन्ते तु दीर्घसमासयुक्ता समस्तैकपदात्मिका उत्कलिका कार्या।

**अन्ते पद्यसमायुक्ता यत्यनुप्रासशोभिनी।**
**चतुरुत्कलिकास्याद्वा विभक्त्याभासलाञ्छिता ।।**

अन्ते विद्यमानं पद्यं यत्यनुप्रासशेभिनी भवति। विभक्त्याभासलाच्छिता स्यात् चतुरुत्कलिका।

**कलिकोत्कलिकामृष्ठनव्यताललयक्रमा।**
**प्रतिपद्यं भवेन्नेतृनाम तत्तद्विभक्तिमत् ।।**

कलिकोत्कलिका लक्षणान् स्पृष्ट्वा, नव्यताललयक्रमे प्रतिपद्यं तेषु तेषु विभक्तिषु विरच्य, नायकस्य नामं विनात्यक्त्वा वर्णितंकाव्यं अष्टभेदेषु एकमिति ज्ञातव्यम्।

**विराजन्ती कीर्तिमती सुभागा भोगमालिनी।**
**कलावती कान्तिमती कमला जयवत्यपि ।।**
**एता विभक्त्यधिष्टात्र्यो देवताः कथिताः बुधैः।**
**ददत्येताः स्तुतिप्रीताः स्वनामसमम् फलम् ।।**

पूर्विकानां मतमनुसृत्य अमृतानन्दयोगिनः वदन्ति यदष्टविभक्तीनां अधिष्टानदेवताः अष्ट भवन्ति। तेषां नामस्मरणेन तत्तद्देवतानुग्रहः अवश्यं भवतीति विश्वासः। ते च देवताः यथा–

१. प्रथमाविभक्तिः–विराजन्ती।
२. द्वितीयाविभक्तिः–कीर्तिमती।
३. तृतीयाविभक्तिः–सुभगा।
४. चतुर्थीविभक्तिः–भोगमालिनी।
५. पञ्चमीविभक्तिः–कलावती।
६. षष्ठीविभक्तिः–कान्तिमती।
७. सप्तमीविभक्तिः–कमला।
८. सम्बोधनाविभक्तिः–जयवती इत्येवं प्रकारेण।

**वाक्यमेकं च कर्तव्यमन्ते सर्वविभक्तिकम्।**
**आर्या वान्येतमं कुर्यात् कविश्रुत्याख्यया ततः॥**

काव्यस्यान्ते सर्वविभक्तिसमायुक्तं वाक्यमेकं भवेत्। तच्च वाक्यं कविः लोक–प्रसिद्धार्याच्छन्दसि वा तत्समानेतर छन्दसि वा कुर्यात्।

**अप्राकृता प्राकृता वा प्राकृतोन्मिश्रितापि वा।**
**देशीभिश्च पदैर्युक्ता भाषाणां चैव सञ्चयैः॥**

अप्राकृता संस्कृतभाषा, तस्यां भाषायां वा, प्राकृतभाषायां वा, संस्कृतप्राकृत–मिश्रितभाषायां वा, देशीयभाषायां वा, पदसङ्कलनं कृत्वा रचना कार्या।

**वंशवीर्यश्रुताद्यैश्च युक्तोदाहरणं मतम्।**
**अमुष्य नायकाः प्रोक्ता देवा दैत्या महीसुराः॥**
**गुरवः क्षोणिपालाश्च सामन्ताः सचिवादयः।**
**विभक्तिसप्तकयुता सन्ध्या चैव विना कृता॥**

नायकस्या वंशवर्णना, पराक्रमः, कीर्तिप्रतिष्ठादिसहितोदाहरणेन काव्यरचना कार्या। यथा काव्ये सप्तविभक्तयः तथैव सप्तविषयाः अत्र प्रधानतया भवितुमर्हन्ति। यथा–देवाः, दैत्याः,ब्राह्मणाः गुरवः, राजा, सामन्ताः, सचिवादयाः। अस्मिन्नवश्यं सूर्योदयवर्णनं, चन्द्रोदयवर्णनञ्च भवेत्।

**अङ्गुलीति समाख्याता सद्भिश्चाटु विशारदैः।**
**केवलं कलिकासङ्गात्कल्याणीति निगद्यते॥**

इमां प्रक्रियां विशारदाः "अङ्गुलीति" आख्यायन्ते। केवलं कलिकासङ्गा-त्कल्याणीति निगद्यते।

**केवलोत्कलिकासङ्गादुत्फुल्लकवती भवेत्।**
**यस्यास्तूत्कलिकास्थाने केवलार्था प्रयुज्यते ।।**

केवलमुत्कलिकासङ्गात् उत्फुल्लकवती भवति। उत्कलिकास्थाने केवलमार्याछन्दसः प्रयोगः कार्या।

**सा फलोदाहरणं वास्यादार्यासङ्गान्न भिद्यते ।**
**केवला प्रथमा वाणी द्वितीया केवला झरी ।।**
**तृतीया केवला वापी चतुर्थी केवला फणी।**
**पञ्चमी केवला सारी षष्ठी मोरीति कथ्यते ।।**
**सप्तमी खलिका प्रोक्ता सम्बुद्धिः सरसावती।**
**भिनैर्वर्णैर्भिन्ननाम सम्भावे च तथा भवेत् ।।**

सा एवोत्कलिका फलोदाहरणमिति कथ्यते। प्रथमादि विभक्तयः भिन्नभिन्नवर्णेन विभिन्न नाम्ना प्रसिद्धाः।

(१) केवलावाणी (२) केवलाझरी (३) केवलावापी (४) केवलाफणी
(५) केवलासारी (६) मोरी (७) खलिका (८) सरसावती

**सर्ववाक्यं च कर्तव्यं कविनायकलाञ्छितम्।**
**एषैव गद्यरहिता नवमाणिक्यमालिका ।।**

एवं प्रकारेण अष्टविभक्तिष्वष्टाद्यान् विरच्यान्तिमं नवमं वाक्यं कविनायकलाञ्छितं भवेत्। एषा एव गद्यरहिता पद्यरचना। नवश्लोकसमन्विता "नवरत्नमालिका" इति अस्य नाम।

**एषैव च त्रिगुणिता भवेन्नक्षत्रमालिका।**
**रसः शृङ्गार एव स्याद्भोगावल्याः प्रपञ्चने ।।**

एषैव नवरत्नमालिका यदि त्रिगुणिता भवति तर्हि सा नक्षत्रमालिका इत्युच्यते। अस्मिन् काव्ये शृङ्गारः एकः एव रसः भवितुं शक्नोति। एतादृशप्रपञ्चनं "भोगावली" इत्युच्यते।

**अनुषङ्गेण मिलितो वीरोऽपि स्यात्क्वचित्क्वचित् ।**
**वर्णनीयाः क्रमात्साङ्गवीरभोगादयो गुणाः ।।**

क्वचित्क्वचित् वीररसः विद्यते चेदपि नास्ति दोषः। शृङ्गारेण साकं पराक्रमभोगादयाः गुणाः प्रेम्णा वर्णयेत् । इदमपि भोगावली लक्षणमेव ।

**आशीः पद्यसमायुक्ता प्रथमे विरतावपि।**
**अष्टभिर्वा षोडशभिः विंशत्या वा पदैर्युता।।**

आदौ आशीःपूर्वकं, सूचनायुक्तं पद्यं कार्यम् । तच्च पद्यं अष्टपद्युक्तं वा, षोडशपद्युक्तं वा, विंशतिपद्दुक्तं वा भवेत् ।

**दलानि षड्वा चत्वारि प्रत्येकं सयतीनि च ।**
**मध्ये भवेयुरथवा यमिताद्यक्षरैः क्वचित् ।।**

मद्ध्ये प्रत्येकं यतियुक्तदलानि षड्वा, चत्वारि वा भवेयुः। अथवा यमिताक्षरपदेः अर्थगम्भीरता भवेत् ।

**गतेरपि प्रयोगः स्याद्यथारीति समृद्धितः ।**
**तत्तदर्थावसानेऽस्य विरतिः स्यात्पदे पदे ।।**

विशिष्टपदरचना समृद्धितः यत्र विद्यते तत्र गतेः प्रयोगः शोभां ददाति । तत्तदर्थावसाने विरतिरवश्यं भवेत् ।

**देव त्वं जय वीर त्वं धीर जीवादिकं पदम् ।**
**तत्तत्स्थाने प्राकृतादिभाषाभिर्बिरुदाश्रितैः ।।**

"देव त्वं जय वीर त्वं धीर त्वं जय" इत्यादिकं पदं सन्दर्भोचितरूपेण प्रयुज्येत । तत्तत्स्थाने नायकस्य बिरुदाङ्कितान् पदान् प्राकृतादिभाषाभिप्रयुज्येत ।

**भोगोपनृम्भितैर्गद्यपद्यै सेयं सपल्लवैः ।**
**भोगावली च देशर्तुभावाङ्कज्ञानचातुरी ।।**

राजभोगोपजृम्भितैः गद्यपद्यैः देशवर्णना, ऋतुवर्णनायुक्त भावाङ्कज्ञानचातुरीशोभित पदरचना "भोगावली" इत्युच्यते ।

**वर्णयेद्वीरलब्धांश्च तांस्तान् श्लाघ्यादिकान् गुणान् ।**
**चतुर्भिर्लघुभिः पद्यप्रान्ते सम्मदकारिणी ।।**

नायकस्य पराक्रमेण लब्धान् श्लाघ्यादिकान् गुणान् पद्यस्यन्तिमपादचतुष्टये वर्णयति चेत् तत् काव्यशोभादायकं भवति।

**मङ्गलानि फलानि स्युः प्रथमश्रवणादपि। वृत्तेनैकेन नेतारं वर्धयेदाशिषाऽन्तिमे।।**

काव्यस्य प्रथमश्रवणादारभ्य फलानि मङ्गलानि भवेयुः। अन्तिमे च एकेनैव वृत्तेन नायकाशिषा वर्धयेत्।

**ग्रन्थसंख्या शतं षष्टिरत्र ख्यातोत्तमा बुधैः।**
**भोगावलिसमायुक्ता देवानां भूभुजामपि।।**

ग्रन्थसंख्या अर्थात् श्लोकसंख्या षष्ट्यधिकैकशतमुत्तमा भवतीति बुधानाम-भिप्रायः। ते एव श्लोकाः यदि भोगावलीलक्षणसमायुक्ताः, देव, राजा यदि नायकः भवति तर्हि काव्यशोभा वर्धते।

**वर्णनेन परं विद्यात् प्रायशो बिरुदावलीम्।**
**द्वाभ्यां वापि चतुर्भिर्वा पञ्चभिष्षड्भिरेव वा।।**
**भाषाभिर्विहिताभिः स्याद्यदि वा देशभाषितैः।**
**कुलक्रमागतैर्वापि स्वापदाननिदर्शकैः।।**
**पदैरपि च सा यै स्यात्तत्तदर्थविनाकृतैः।**
**नानापुरातनक्ष्माभृड्बिरुदारोहणैरपि।।**

वर्णनेनसाकं नायकस्य बिरुदावलीमपि सूचयति चेत् उत्तमं भवति। द्वाभ्यां, चतुर्भिः, पञ्चभिः, षड्भिः भाषासु अथवा देशीयभाषायां वा ग्रन्थरचनोत्तमं भवति। कुलक्रमगताः दानधर्मादयः निदर्शनत्वेन दर्शयेयुः।

**वाहनारोहशास्त्रास्त्रप्रयोगैर्भोगवर्णनैः। गुणिनां वर्णनैश्चापि विनयक्रमशालिभिः।।**

तत्कालीनवाहनारोहणैः, शस्त्रास्त्रप्रयोगैः, भोगभाग्यवर्णनैः, गुणगणवर्णनैः, विनयपराक्रमवर्णनैश्च काव्यस्य शोभां वर्धयति।

**गौडरीत्या विधातव्या सानुप्रासा सपल्लवा।**
**आद्यन्तयोः स्यादार्या वा गाथा वा मङ्गलात्मिका।।**

गौडरीत्या काव्यस्य आद्यन्तश्लोकाः आर्याच्छन्दसिवा, गाथाच्छन्दसि वा भवितुं शक्नोति। सपल्लवाः सानुप्रासाः स्यात् गाथा मङ्गलात्मिका।

**इत्येवं लक्षणानि स्युर्लक्षणानीतराणि वा।**
**सद्गुणारोपणं यत्र नेतुः सैव गुणावली ।।**

इत्येवं लक्षणानि वा इतरलक्षणानि वा उपयुज्य नायकस्य सद्गुणानि यत्र कीर्त्यन्ते तत् भवति गुणावली।

**गुणाः परोपकारार्था वर्ण्याः सर्वे प्रधानतः।**
**दलानि चाष्टौ चत्वारि सानुप्रासयतीनि च ।।**

वृत्तगन्धीति काव्ये नायकस्य परोपकारार्थगुणाः प्रधानतया वर्ण्याः। यत्यनुप्राससहितष्टौ वा चत्वारिवा दलानि अत्र भवेयुः।

**मात्राभिरथवा वर्णैः समानि स्युः परस्य च।**
**तादृग्वर्णानि सर्वाणि संस्कृतेन क्वचित्क्वचित् ।।**

समासाः मात्ररूपेण वा वर्णरूपेण वा भवेयुःः। तादृशाः वर्णाः संस्कृते एव प्रयोक्तव्याः।

**अस्याः शृङ्गार एकः स्यात् क्वचित्तत्राद्भुतो रसः।**
**दलपङ्क्तिविरामेषु देवेत्यादिपदं न्यसेत् ।।**

अस्यां वृत्तगन्ध्यां प्रधानरसः शृङ्गारः भवेत्। कुत्रचित् अद्भुतरसमपि अङ्गरसत्वेन स्वीकर्तुं शक्यते। दलपङ्क्तिविरामेषु 'देव' इत्यादिपदम् न्यसेत्।

**आदौ समासभूयिष्ठमन्ते स्याद्वृत्तगन्धि च।**
**गद्याद्यपरमादद्यान्मध्ये हि पदमेव वा ।।**

आदौ समासभूयिष्ठम्, अन्ते वृत्तगन्धि च भवेत्। अर्थात् आद्यन्ते गद्यानि मध्ये मध्ये पद्यानि च भवेयुः इति ।।

**पुरे जनपदे रम्ये देशे या गुणसम्पदः।**
**नेतारं वर्णयेत्ताभिरेषैव स्याद्गुणावली ।।**

पुरवर्णना, जनपदवर्णना, देशवर्णनैः साकं नायकमप्यनुसन्धानं कृत्वा वर्णयेत्। तथ एषा गुणावली इति वृत्तगन्धी भवति।

**चतसृभिर्भवेत् षड्भिर्भाषाभिर्विलसत्क्रमम्।**
**एकैकभाषयैकैकं पद्यं सर्वविभक्तिभिः ।।**

चतसृषु भाषासु वा, षडसुभाषासु वा क्रमेण विलसत् एकैकस्मिन् विभक्तौ, एकैकस्मिन् भाषायां, एकैकं पद्यं रचयेत्। तथैव सर्वेष्वपि विभक्तिषु रचना कार्या।

**रगलापि तथापि स्यात्तत्र तत्र सपल्लवा ।**
**श्लोकावाद्यन्तयोर्नेतृमङ्गलार्थौ न्यसेद् वधः ।।**

रगणम् गुरुणा लघुना युक्तं प्रतिपद्यस्य गद्यस्य च अन्तिमे भागे भवितुं प्रयत्नः कार्यः । तत्र तत्र सपल्लवा स्यात् । आद्यन्ते द्वौ श्लोकौ अवश्यं भवेताम् । तौ द्वौ श्लोकौ नायकस्य अशीः पूर्ण मङ्गलार्थे न्यसेताम् ।

**त्रिसृभिर्वाथ वृत्तं चेद्भाषाभिर्मण्डलक्रमात् ।**
**उत्तमं चक्रवालं स्यादन्यूनानदधिकं मतम् ।।**

एकस्यामेव भाषायां लिखिताः पद्यसमूहः मण्डलमित्युच्यते । तथैव तिसृभिः भाषाभिः भिन्नाभिन्नवृत्तैः मण्डलत्रयं जायते । कापि भाषापि वा भवतु पदरचनायामुत्तमपदरचना ततोत्युत्तमार्थाः च भवेयुः । शब्दार्थयोः अन्योन्यातिरिक्तम्, शब्दार्थयोः न्यूनाधिक्यं विना मनोरञ्चकरचनारीतिरेव "चक्रवालम्" । अयं काव्यमुत्तमकाव्यं भवति ।

**रसादीन्वर्णयेद्भूतिर्गुणकर्मानुसारतः ।**
**युक्तमेतद्विशेषेणसिद्धं च विजिगीषुभिः ।।**

नायकगुणकर्मानुसारं रसादीन् वर्णयेत् । रससिद्धिभूयिष्टेभ्यः कविभ्यः इदमुत्तमम्भवति ।

**द्वात्रिंशषद्गद्यसंयुक्तं गद्याग्रैः पल्लवैर्युतम् ।**
**चतुर्धा भिन्नरूपेण व्यस्तं सस्वरबन्धनम् ।।**

द्वात्रिंशत् गद्यसंयुक्तं, प्रत्येकस्यापि गद्यं पल्लवैर्युक्तं, सस्वरबन्धने न्यस्तं भिन्नरूपेण चत्वारः गद्यप्रबेधाः विद्यन्ते । कवि काव्यं बहुकष्टेन निर्माति । तच्च काव्यं गानरूपेण सस्वरबन्धनमतिकष्टतरम् । तादृशस्य काव्यस्यर्थमजानन्नपि श्रवणानन्दं सर्वेषु जायते । अतः एव तस्य काव्यस्य श्रव्यकाव्यं इति नाम ।

वाल्मीकिः रामायणं विरच्य लवकुशैः तद् पद्यरूपेणालपितम् । अतः एव तत् श्रव्यकाव्यत्वेनापि प्रसिद्धम् ।

पूर्वोक्तेषु चतुर्ष्वपि काव्यविभागेषु स्वरतालनिबन्धनमस्य वैशिष्ट्यम् ।

**तालैर्द्वादशभिर्युक्तं लोकोत्तरमुदाहृतम् ।**
**वेश्यः स्वरयुतस्तालः परं हर्षं सवै यतः ।।**

तादृशं काव्यं द्वाद्वशभिः तालैः युक्तं लोकोत्तरचमत्कारजनकं भवति। कथमितिचेत् स्वरयुतस्तालः काव्ये निवेश्यते। सः तालः अनिर्वचनीयानन्दं प्रददाति।

**त्यागादयो गुणा यस्यामूह्यन्ते कविभिः कृतौ।**
**पूर्वाद्यास्तासु तत्रत्यान् अहूयाद्भुतदर्शनम्॥**

महाकविना लिखितेषु ग्रन्थेषु त्यागादयो गुणाः ऊह्यन्ते।

**चतसृभिश्च भाषाभिः सा भवेद् विलसत्क्रमम्।**
**आदौ भवेत् गद्यमेकं चतुर्भिः पल्लवैर्युतम्॥**

सा कृतिः चतसृभिः भाषाभिः प्रेमोत्पत्तिः यथा भवति तथा कार्या। तत्पूर्वं चतुर्भिः पल्लवैर्युतं गद्यमेकं रचयेत्।

**चतुर्धैष समावृत्तं चतुरक्षरबन्धनम्।**
**आशीराद्यन्योः कार्या नेतुः पद्यद्वयेन तु॥**

चतुरक्षरबन्धनसमायुक्तं, चतुर्विधाक्षरसमायुक्तमन्तिमे नायकस्य आशिर्वचनपद्यद्वयेन कृतिं लिखेत्।

**एवं पद्यैश्च गद्यैश्च सा भवेत्त्यागघोषणम्।**
**अथ संख्या भवेत् षष्ठिः शतं वा स्याद्विशेषतः॥**

एवं पद्यैः गद्यैश्च संयुक्तं काव्यं "त्यागघोषणम्" इत्युच्यते। अथ षष्ठिः वा विशेषतः शतं वा त्यागघोषणम् भवेत्।

**अस्यास्तु सर्वे नेतारो भवेयुस्त्यागिनो सदा।**
**पद्यं गद्यं च तालं च सानुतालं चतुर्विधम्॥**

अस्याः सर्वेऽपि नेतारः सदा त्यागिनः भवेयुः। (१) पद्यं (२) गद्यं (३) तालं (४) आनुतालं इति चत्वारः विषयाः कृतिषु भवेयुः।

**देववीर जयेत्यादिसम्बुद्धिश्चान्त एव च।**
**स्याच्चतुर्धा च वृत्तं स्याच्चतुर्भद्रमितीरितम्॥**

देव, वीर, जयेत्यादि मङ्गलवाचकपदानि सम्बोधनयासाकं भवेत्। चतुर्विधवृत्तानि भवेयुः। तादृशस्य अस्य काव्यस्य "चतुर्भद्रम्" इति नाम।

एवं प्रकारेण अमृतानन्दयोगिनः स्वीये ग्रन्थे अलङ्कारसङ्ग्रहे काव्यरचना-प्रभेदान् प्रतिपादितवन्तः।

## द्वितीयः प्रकाशः

### पाश्चात्यकाव्यरचनाप्रभेदाः

काव्यशब्देन सर्वापि कविकृतासारस्वतप्रक्रिया यद्यपि स्वीक्रियन्ते तथापि काव्यशब्देन व्यपदिश्यमानासु रचनासु महान् भेदः अथवा महत् वैविध्यं दृश्यते। रचनासरणीमनुसृत्योपयुज्यमान गद्यपद्यादि भाषावैखरीमनुसृत्य कृतस्य काव्यस्या-मोदप्रकारमनुसृत्य च काव्ये बहुविधप्रकाराणां निरूपणं कृतम्। तत्र अरिस्टाटिल् महोदयः प्रथमः प्रमुखश्च। तेषां मतानुसारं काव्यरचनाप्रक्रियाः कथमिति विचार्यते। यथा–

### १. अरिस्टाटिल् मतानुसारं काव्यरचनाप्रभेदाः

अरिस्टाटिल् महोदयानां ग्रीक् भाषायां विद्यमान **द पोयसिस्** (The Poiesis) इति ग्रन्थस्याङ्ग्लभाषायामनुवादः एस्.एच्.बुच्चर्(S.H.Butcher) महोदयेन **द पोयटिक्स्** (The Poetics) इति नाम्ना कृतः। ग्रन्थस्यास्याधारेण अरिस्टाटिल् महोदयानामभिप्रायेण काव्यचनाप्रक्रियाः इमाः भवन्ति। यथा–

**१. ऐतिहासिककाव्यम्** (Epic Poetry) **२. दुरन्तात्मककाव्यम्** (Tragedy)
**३. हास्यात्मककाव्यम्** (Comedy)

**१.१. ऐतिहासिककाव्यम्** (Epic Poetry)

ऐतिहासिककाव्यस्य बहुप्रकारकाः भेदाः द्रष्टुं शक्यन्ते। इदं च ऐतिहासिक-काव्यं सङ्कीर्णम् (Complex), सरलम् (Simple),नीतिशास्त्रयुक्तम् (Ethical), करुणात्मकम् (Pathetical) वा भवितुमर्हति।

काव्येऽस्मिन् सुदीर्घोपाख्यानानि भवन्ति। आलोचनाप्रकाराः, भाषाशैली च चमत्कारयुक्तं भवति। ऐतिहासिककाव्यस्य आरम्भः अन्तश्च एकस्याः एव विचारधारायाः द्योतकं भवति।

ऐतिहासिककाव्ये नायकः वीरः,अतिबलयुक्तः,असामान्यः च भवितुमर्हति। अस्य काव्यस्य पाठकाः सुसंस्कृताः भवन्ति। अतः अस्मिन् अङ्गविक्षेपाणामपेक्षा न भवति।

**१.अ. रूपकम्**

पूर्णक्रियाणामनुकरणं रूपकमिति एतेषां अभिप्रायः। तच्च रूपकं द्विविधम् **दुरन्तात्मकम्, हास्यात्मकम्** च।

**१.अ.१. दुरन्तात्मककाव्यम्** (Tragedy)

दुरन्तात्मककाव्यं प्रवृत्तीनां, व्यवहाराणामनुकरणं भवति। ताः च प्रवृत्तयः गभीराः(Serious),पूर्णाः (Complete) भवन्ति। चमत्कारयुक्तभाषया (In Language Embelised), प्रतिभयालङ्कृतं (Artistic) भवति इदं काव्यम्। अत्र इतिवृत्तस्य आदिमद्ध्यान्ते च वर्णनं भवेत्। अयं च इतिवृत्तं परिमाणे तथा भवेत् यथा प्रेक्षकाः स्वस्मृतिपथे स्थापयेत्। अत्र अभिनेता स्वानुकम्पायुक्ताभिनयेन दुरन्तभावाविष्करणं करोति। अस्य च दुरन्तात्मककाव्यस्य गुणवत्ता षड्भागैः निर्धारणीया। यथा–

**१. कथावस्तुः** (Plot) **२.कथापात्रम्** (Character)
**३.रचनाशैली** (Diction) **४.आलोचना** (Thought)
**५.प्रदर्शनम्** (Spectacle) **६.गीतम्** (Song)

**१. कथावस्तु** (Plot) – कथाविन्यासशैलिरेव कथावस्तुः इत्युच्यते।

**२.कथापात्रम्** (Character) – स्वीयाभिनयेन सन्तोषस्य वा दुःखस्य वा प्रकटनं यत् करोति तत् कथापात्रम्।

**३.रचनाशैली** (Diction) – पद्ये,गद्ये विद्यमानानामालङ्कारिकप्रयोगानां, चमत्कार–पदार्थानां सुष्ठुप्रयोगः अत्रान्तर्भवति।

**४.आलोचना** (Thought) – विद्यमानेषु सन्दर्भेषु युक्तविषयस्वीकरणमेव भवति आलोचना।

**५.प्रदर्शनम्** (Spectacle) – अयं विकारयुक्तहृद्यता, काव्यरचनायामतिकनिष्ठविषयः भवति।

**६.गीतम्** (Song) – काव्येऽस्मिन् अतिप्रधानं भवति गीतम्।

**१.अ.२. हास्यात्मककाव्यम्** (Comedy)

हास्यात्मके निरन्तराणां कथापात्राणामनुकरणं भवति। निरन्तरो नाम न तु नीचार्थे स्वीकरणीयः। तत्र कथापात्रे किमपि न्यूनतां दर्शयित्वा प्रेक्षकान् मोदयति। रूपकेऽस्मिन् मुखावरणं धृत्वा अभिनेतारः हास्यरसस्योत्पादनं करोति। समाजे विद्यमानान् पुरुषान् युवकान् च दूषयितुमस्य हास्यात्मककाव्यस्य साहाय्यं स्वीकृतवन्तः।

## २. बिर्जाडिष् प्रसाद् महोदयानामभिप्रायेण काव्यरचनाप्रभेदाः

बिर्जाडिष् प्रसाद् महोदयाः आधुनिककारः। एतेषां मतानुसारं काव्यरचना-प्रक्रियाः एवं भवन्ति यथा-




**२.१. पद्यम्** (Poetry)

पद्यं नाम साहित्यांशेन परिगणितं चित्रछन्दोनिबद्धमेकं कविकर्म भवति। अहोस्विद् पद्यशकलमेकं शृङ्गाशदिविविधचित्तक्षोभयुतम्, रूपकोपमायमका-नुप्रासाद्यर्थ शब्दालङ्कारपुष्टितम्, अनेकविध कविसङ्केतसमन्विताञ्च। आलङ्कारिक-भङ्गियुग्भाषा प्रधानता, अनेकविधवृत्तिनिबद्धता अनुप्रासादि शब्दालङ्कारावेशः, पदानामुचितसमयावृत्तिश्च गद्यात् पद्यं पृथक्करोति। सर्वदा पद्यं तस्य साङ्कल्पिकतया शब्दसंघटनया च विविधविकारान्प्रति त्वरितमस्मान् नेष्यति। तस्य च पद्यस्य भेदाः बहवः सान्ति यथा-

**(१) भावगीतम्** (Lyric) **(२) सङ्कीर्तनम्** (Ode) **(३) गीतकम्** (Sonnet)

**(४) विलापकाव्यम्** (Elegy) **(५) लघुकाव्यम्** (Idyll)

**(६) ऐतिहासिकम्** (Epic) **(७) लघुगानम्** (Ballad)

**(८) व्यङ्ग्यसाहित्यम्** (Satire)

### २.१.१. भावगीतम् (Lyric)

ग्रीक् गानं द्विधा विभक्तुं शक्यते।

**(१) भावगीतम्** (Lyric) **(२) वृन्दगीतम्** (Choric)

भावगीतं एककण्ठेन गीयते। मिलितगीतश्च समूहगानं भवति। एषु भावगीतमेव आङ्ग्ले भावगीतत्वेनागतम्। अस्मिन् लक्षणद्वयं द्रष्टुं शक्यते। मनोविकारव्यक्तीकरणं, सङ्गीतात्मकमिति च। पूर्वकाले कश्चन वाद्योपकरणसाहाय्येन भावगीतस्य प्रस्तुतिरासीत्। अपरिपक्व भाषाञ्च प्रयुज्यते स्म। विषयमपि अप्रधानमासीत्। यतोहि गायकः सस्वरेण अभीष्टमनोविकारान् जनयति। बुद्ध्यपेक्षया हृदयेन साकं अस्य सम्बन्धः आसीत्। भावगीतम् एकस्येव विचारस्य, आलोचनायाः परिस्थितेः च द्योतकं भवति।

#### २.१.१.१.भावगीतस्य घटना

भावगीतं त्रिषु भागेषु विभक्तुं शक्यन्ते। तच्च भावकस्य मानसिक–स्थित्याधारेण भवति। प्रथमभागः भावकस्य मनोविकारान्, कल्पनांश्च द्योतयति। द्वितीयभागः भावुकस्य मनोविकाराधारेण जनितान् आलोचनान् द्योतयति। तृतीयेभागः प्रथमभागवत्, भवति। भागेऽस्मिन् मेधसः उपयोगः अधिकतया कर्तव्यं भवति। भागेऽस्मिन् कविः प्राथमिक मनोभावे प्रतिगच्छति यच्च भावः गीतस्य कारणं भवति।

एतञ्च भावगीतम् एकं लघुगीतं भवति यत्र केवः एकस्यैव मनोविकारस्य उल्लेखनं भवति।

### २.१.२. **सङ्कीर्तनम्** (Ode)

भावगीतवत् सङ्कीर्तनमपि ग्रीक्साहित्यादेव आगतम्। एतच्च सङ्कीर्तनं पदानां गम्भीररूपेण संयोजनं भवति। अन्त्यानुप्रसायुक्तं एतत् सङ्कीर्तनं भावगीता-पेक्षया बृहत् भवति। विभागेऽस्मिन् स्पष्टव्यक्तीकरणं द्रष्टुं शक्यते।

कविः अस्य विषयवस्तुचयने तथा तद्विषयप्रतिपादने च अतीव श्रद्धावान् भवति। कवेः काल्पनिकशक्तेः द्योतकं भवति सङ्कीर्तनम् । कविरत्र स्वीयलक्ष्यान् सर्वदा प्रकटयति।

सङ्कीर्तनम् द्विधा विभक्तम्।

**(१) द डोरैन् अथवा पिण्डारिक् सङ्कीर्तनम्**

**(२) द लस्बियन् अथवा होराटियन् सङ्कीर्तनम्।**

### २.१.२.१. द डोरैन् अथवा पिण्डारिक् सङ्कीर्तनम्

यत्र अस्य सङ्कीर्तनस्याविर्भावः जातः तदनुसृत्यैव अस्य नाम भवति। द डोरैन् सङ्कीर्तनम् एकं मिलितगितं भवति, यच्च नृत्यस्य साहाय्येन गीयते। अस्य च सङ्कीर्तनस्य भागत्रयं विद्यते। यथा **(१) स्ट्राफी (२) आन्टीस्ट्राफी (३) एपोड्** इति।

१.१) नृत्तसमये दक्षिणात् वामंप्रति गमनसमये यत् गीतं गीयते तत् भवति स्ट्राफी।

१.२) यत्र वामात् दक्षिणंप्रति गम्यते तदा यत् गीतं गीयते तत् भवति आन्टीस्ट्राफी।

१.३) स्थित्वा यत् गीयते तद्भवति एपोड्।

### २.१.२.२. द लस्बियन् अथवा होराटियन् सङ्कीर्तनम्।

डोरियन् सङ्कीर्तनापेक्षया लस्बियन् सङ्कीर्तनम् अति सरलं भवति। तस्मात् तदनुकरणार्थं कवये सारल्यं भवति। "लस्बोस्" इत्यस्मिन् द्वीपे अस्य प्रोयगः अधिकः आसीदित्यतः अस्य नाम लस्बियन् इति जात। समानरूपे विद्यमानाः लघुश्लोकाः अत्र भवन्ति।

### २.१.३. **गीतकम्** (Sonnet)

गीतकस्य जन्मस्थलं तावत् निश्चितरूपेण निर्णेतुं न शक्यते। सिसिलि, प्रोवेन्स् नामकाभ्यां द्वाभ्यां विदेशिकाभ्यां तत्र तावत् साध्यता द्वयं प्रकाश्यते। गीतकमदः त्रयोदशशताब्दार्धे आविर्भूतमिति कैश्चित् विचिन्त्यते। तत् तावत्

विशिष्य पेट्रूर्क इति नाम्ना प्रसिद्धकविसम्बद्धमिति निरूपितम्। तस्मात् प्राक् इट्टलीदेशीय डान्टे इति नाम्ना प्रसिद्धेन केनचित् कविनैव रचितानि तानि इत्यपि तौ न्यरोपयताम्। तत् वस्तुतो लघुगीतमेकमासीत्। तत् गीतं सङ्गीतयुतमेवोच्चार्यमाण–मासीत्। आयासेन उच्चार्यमाणः कश्चन शब्दः इत्यर्थमिट्टलीदेशीयं गीतक–पदमभिव्यनक्ति। एतच्च गीतकं चतुर्दशपङ्क्तियुक्तं एकं लघुगीतं भवति।

### २.१.३.१. द इट्टालियन् अथवा पेट्रार्कन् गीतकम्

अस्य प्रथानतया द्वौ विभागौ स्तः।

**(१) औक्टाव्** **(२) सेस्टट्**

ओक्टाव् अष्टपङ्क्तियुक्तं भवति। यस्य प्रासः a bb a a b ba भवति। सेस्टंट् षड् पङ्क्तियुक्तं भवति। यस्य प्रासः c d e c d e इति कुत्रचित् c d c c d c इति वा भवितुमर्हति ।

आङ्ग्लपरिशोधकाः षोडशशताब्दस्य प्रारम्भे विकसितरूपेण अस्य गीतकस्य प्रयोगः कृताः। यः आङ्ग्लगीतकमिति वा षेक्स्पियरियन् गीतकमिति वा प्रसिद्धो जातः। एतच्च गीतकम् त्रिषु चतुष्पदश्लोकेषु आरभ्य द्विपदश्लोके समाप्यते। यथा– ab ab cd cd ef ef gg

परमत्र स्पेन्सारियन् गीतकमिति यत् विद्यते तच्च प्रतिचतुष्पादमपि अग्रिमचतुष्पादेन साकं बद्धितं भवति। यथा–

a b ab bc bc

c d cd ee इति।

### २.१.४. विलापकाव्यम् (Elegy)

इदं च विलापकाव्यं विलापविकाराभ्यां निर्भरं कस्यचित् पुरुषस्य मृतौ तदीयैः आलाप्यमाणं गीतमेकं भवति। विलापकाव्यं तस्य विषयस्य वा विकारस्य वा आधारेण नैव भवति, परं तस्य छान्दसाधारण भवति। अस्मिन् प्रेमगीतान्यपि अन्तर्भवन्तीति केचन वदन्ति। अतः विलापकाव्यो नाम युद्धगानं वा, प्रेमगानं वा, राष्ट्रियगानं वा, विलापकाव्यं वा भवितुं शक्नोति। एकं दीर्घाक्षरं, लघ्वक्षराणि द्वयं, यत् प्रथमपङ्क्तौ षड्वारं द्वितीयपङ्क्तौ पञ्चवारं च भवन्ति तत् विलापकाव्यमित्युच्यते।

**२.१.५. लघुकाव्यम्** (Idyll)

आङ्ग्लसाहित्ये लघुकाव्यं एका विशिष्टा प्रक्रिया भवति। इडिल् इति नाम्ना विदेशेषु प्रसिद्धमिदं काव्यं लघुत्वेन गुरुत्वेन च द्विधम्। लघुकाव्यं कश्चनं शान्तियुजो ग्रामस्य सौन्दर्यं प्रतिपादयति। बृहत्काव्यं (गुरुकाव्यम्) तावत् पौराणिकनायकानां कथामाविष्करोति।

अस्य निश्चितरूपं न भवति। कविः यथेष्टं तस्य रूपनिर्धारणं कर्तुं शक्नोति। विलियम् वार्डस् वर्थ् लिखित **लैन्स् ऋट्टण् इन् मार्च** इति लघुकाव्ये वर्षकालानन्तरं विद्यमानस्य वसन्तकालस्य वर्णना कृता।

लघुकाव्यं व्यक्तेः, प्रदेशस्य, वस्तुनः वा विवरणं न भवति। परं कवेः भावनानुगुणं तेन किं दृष्टं, किं अनुभूतमित्यादयः विषयाः अत्र भवन्ति। पाठकस्य मनसि शाश्वतरूपेण काव्यं भवितुं भाषा साहाय्यं करोति।

**२.१.६. ऐतिहासिककाव्यम्** (Epic)

विवरणात्मकरूपेण विद्यमानं पद्यं इतिहासः इत्युच्यते। ऐतिहासिक नायकानां प्रवृत्तीनां विजयकीर्त्तनमत्रभवति। कस्यचित् प्रदेशस्य अन्वेषणं वा रक्षणं वा अनेनैव नायकेन क्रियते। प्राय तस्य नायकस्य रक्षणं भगवता एव क्रियते।

अस्य इतिहासस्य उत्कृष्टोदाहरणं भवति **इलियाड्** एवं **ओडीसी** च। अस्य च रचयिता भवति ग्रीक् लेखकः होमर्। इदञ्च काव्यं तदनन्तर लेखकेभ्यः मार्गदर्शनञ्च कृतम्।

इतिहासेऽस्मिन् नायकः धीरोदात्तः, कथावस्तुः ख्यातं भवति। अस्यां उपयुक्ता भाषा अतिप्रौढा, गम्भीरा, उन्नतपदयुक्ता च भवति। इतिहासे विद्यमाण घटनात् प्रौढतया दर्शयितुं कवि कल्पनायाः साहाय्यमवश्यं स्वीकरोति। परं मूलकथा तु वास्तवमेव भवति।

अस्मिन् प्रथमश्लोकेषु कथावस्तुप्रस्तावनेन सह भगवत्स्मरणमपि भवति। ऐतिहासिककाव्ये बहुत्र मानवातीतक्रियाः तथा च देव, देवतानां विन्यासाश्च भवन्ति। अद्भुतरसयुक्ताः बहवः सन्निवेशाः अस्मिन् भवन्ति। पुस्तकरूपेण इतिहासस्य विभागः क्रियते। साधारणतया द्वादशपुस्तकाः भवन्ति। परन्तु **इलियाड्** **ओडिसी** इत्यादिषु चतुर्विंशति पुस्तकाः भवन्ति।

प्रथम इतिहासेषु सदाचारस्य प्रामुख्यता नासीत्। इतिहासः प्रख्यातगानात्, कथातः कवेः आलोचनातः च आगतमासीत्। बहुकालं यावत् कथाकाराणां कण्ठे, जानपदगीतरूपेण विद्यमानानाम् अंशानां समुचितक्रोडीकरणेन कश्चन कविः इतिहासं लिखति।

**२.१.७. वीरगाथा** (Ballad)

महाकाव्यवत् वीरगाथा अपि जानपद साहित्यादेव निष्पन्ना। आङ्ग्ललेखकस्य **छासर्** महोदयस्यापि (१३५०-१४००) पूर्वकालिकता अस्य विद्यते। (harp) बाणस्य साहाय्येन तथा सारंगेः (Fiddle) साहाय्येन च इयं गाथा गीयते स्म। ग्रामे बहिरङ्गप्रदेशे उपविश्य अस्य श्रवणं तथा गानं च कुर्वन्ति।

प्राथमिकस्तरे आटविक नाट्येनसाकं तथैव प्रादेशिकपरिस्थित्यनुसारं अस्य प्रदर्शनमासीत्। प्रायः सर्वेऽपि प्राचीन आङ्ग्लवीरगाथाः १७६५ तमे वर्षे प्रकाशिते **Reliques of Ancient English Poetry** इत्यस्मिन् ग्रन्थे बिषप् पेर्सी महोदयेन संग्रहीताः। प्रेक्षकेभ्यः गीयमानः श्लोकनिबद्धः लघुकथा भवति वीरगाथा।

मानवसंस्कृतेः परिणामकालादारभ्य वीरगाथायाः प्रयोगः द्रष्टुं शक्यते। अतः एव अस्मिन् आलोचनापेक्षया चेष्टाः अधिकतया प्रयुज्यन्ते। एषा च वीरगाथा अतिसरलं, यथा वैर, साहस, कलह, प्रेम, युद्ध तथा जीवनस्य च विषये वर्ण्यते। एषा गाथा प्रायः क्रूर, शोकात्मक, अलौकिकविषयाणां विषये चिन्तयति।

चतुष्पादयुक्तायामस्मिन् वीरागाथायां प्रथम, तृतीय पङ्क्तयः लघुगुरुभेदेन चतुष्पादयुक्ताः तथा च द्वितीय, चतुर्थ पङ्क्तयः त्रिपादयुक्ताः च भवन्ति। आलोचनानुगुणं यथेष्टं पङ्क्तिषु वर्णेषु च भेदः द्रष्टुं शक्यते।

कथा अकस्मात् वेदप्रारम्भं विना आरभ्यते। कदाचित् इयं प्रश्नोत्तररूपेण आरभ्यते। तत्र च वक्तृणां परिचयाभावेऽपि सन्दर्भस्य स्पष्टता भवति।

इतिहासे कुत्रचित् व्यक्तिगतपरिचयः द्रष्टुं शक्यते, परं वीरगाथायां न। वीरगाथायां प्रायः पङ्क्तीनां पौनः पुण्येन उल्लेखः द्रष्टुं शक्यन्ते। अत्र समयस्य वा स्थलस्य वा परिचयः विस्तृतया द्रष्टुं न शक्यते।

वीरगाथायाः प्रकाराः– वीरगाथा द्विप्रकारकेण भवति। यथा–

**१. उन्नतवीरगाथा** **२. साहित्यकवीरगाथा**

### २.१.७.१. उन्नतवीरगाथा

एकस्य पत्रस्य एकस्मिन्नेव् पार्श्वे लिख्यमाना, वर्तमानविषयाणां विचारयुक्तां सुन्दरस्वरेण गीयमाना गाथा भवति उन्नतवीरगाथा। अस्याः आरम्भः प्रायः १६ शताब्देः आरम्भकाले जाता।

### २.१.७.२. साहित्यकवीरगाथा

विवरणात्मकरुपेण विद्यमानं किञ्चन पद्यं भवति साहित्यकवीरगाथा। जानपदवीरगाथायाः अपेक्षया साहित्यकवीरगाथा बृहदी भवति।

**प्रहसनवीरगाथा** (Mock Ballad)

वीरगाथायाः लघुरुपं भवति प्रहसन वीरगाथा। अत्र हास्यरसस्य प्राधान्यं भवति।

### २.१.८. व्यङ्ग्यसाहित्यम् (Satire)

व्यङ्ग्यसाहित्यम् गद्ये तथा पद्ये च द्रष्टुं शक्यते। अस्य किमपि साहित्यकस्वरूपं न भवति। व्यङ्ग्यसाहित्यं सङ्कीर्तनरूपेण वा विलापकाव्यरुपेण वीरगाथारुपेण वा लिखितुं शक्यते। आख्यायिका अपि कथारूपेण लेखनस्य अपेक्षया व्यङ्ग्यसाहित्ये लिखितुं शक्यते।

प्राचीनकालादारभ्य एव व्यङ्ग्यसाहित्यस्य प्रयोगः आसीत्। ग्रीक् लेखकस्य इरिष्टोफेन महोदयस्य उत्कृष्टरचनाः सर्वाः अपि व्यङ्ग्ये एव लभ्यन्ते। अस्मिन् व्यङ्ग्यसाहित्ये दुराचारखण्डनं तथा विवेकहीनत्वं च दृश्यते। एतत् सर्वदा व्यक्तेः उपरि, विभागस्य उपरि अथवा सामूहिकदुराचारस्य उपरि लक्ष्यं स्थापयति। तथैव पापस्य उपरि अस्य दृष्टिः भवति न तु पापकर्तुः।

व्यङ्ग्यसाहित्यम् शरवत् भवति। तत् च साहित्यम् त्रुटिकाले एव स्वलक्ष्यं प्राप्नोति। कुत्रचित् साहित्यमिदं सामाजिकविचाराणां रूक्षविमर्शनमपि करोति। छासर् लांग्लांड महोदयानां व्यङग्यसाहित्येषु तत्कालीन क्रैस्तवमन्दिरेषु जायमानानां

भ्रष्टाचाराणां, नैतिकपतनानां, कापट्यानामुपरि आक्षेपः स्पष्टः आसीत्। विमर्शकैः व्यङ्ग्यसाहित्यम् औपचारिकम् अथवा प्रत्यक्षव्यङ्ग्यसाहित्यम् तथा परोक्ष–व्यङ्ग्यसाहित्यम् इति द्विधा विभज्यते।

### i. प्रत्यक्षव्यङ्ग्यसाहित्यम् –

प्रत्यक्षव्यङ्ग्यसाहित्ये वक्ता उत्तमपुरुषे भवति। एषः पाठकानुद्दिश्य अथवा साहित्ये विद्यमान पात्रमुद्दिश्य च भाषयति। प्रत्यक्षव्यङ्ग्यसाहित्यस्य भेदद्वयं द्रष्टुं शक्यते। यथा **होराषियन् व्यङ्ग्यसाहित्यं, जुवनेलियन् व्यङ्ग्यसाहित्यं** च ।

#### अ. होराषियन्व्यङ्ग्यसाहित्यं

अस्मिन् वक्ता परिष्कृत, फलितचतुर, सहनशीलयुक्तमनुष्यः भवति। यः वक्रीकृत प्रसन्नतायाः अपेक्षया व्यामोह, व्याजवेषयुक्त कपटप्रदर्शनं प्रति गच्छति। स च द्विगलित, अनौपचारिक भाषायाः साहाय्येन मानुषिक मूर्खतायाः तथा युक्तिराहित्यस्य च अपहासः करोति।

#### आ. जुवनेलियन्व्यङ्ग्यसाहित्यम्

अस्मिन् व्यङ्ग्यसाहित्ये वक्तुः कथापात्रं गभीरं सदाचारयुक्तं च भवति। मनुष्यस्य मार्गभ्रंशस्य, नैतिकशेषस्य, अवज्ञायाः, निन्दायाः, मिथ्याज्ञानस्य च प्रतिकरणं भवति।

### ii. परोक्षव्यङ्ग्यसाहित्यम्

एतच्च व्यङ्ग्यसाहित्यम् साक्षात् सम्बोधनापेक्षया विवरणात्मकस्य साहाय्यं स्वीकरोति। यत्र व्यङ्ग्यस्य वस्तुः तत् पात्रं भवति, यः तान् तथा तेषां विचारान् च हास्यास्पदं करोति , यथा तेषां विचारः, भाषा तथा तेषां चेष्टाः च , कदाचित् लेखकस्य निरूपणेन तथा विवरणात्मकशैल्या च वर्धित परिहासान् उत्पादयन्ति।

उत्तमाङ्ग्लव्यङ्ग्यसाहित्यं मध्ययुगादारभ्य सर्वेषामपि युगाणामारम्भे द्रष्टुं शक्यते। आङ्ग्लसाहित्ये तथा प्रपञ्चसाहित्ये एव ड्रैडन्, सामुवल् बट्लर्, वैचेर्लि, अडिसन् होप्, स्विफ्ट्, गे, फील्डिंग्, जान्सन् तथा गोल्डस्मित् इत्यादीनां काले महत्तररुपेण व्यङ्ग्यसाहित्यस्य प्रयोगः द्रष्टुं शक्यते।

विक्टारियन्कालः व्यङ्ग्यसाहित्यस्य प्रधानयुगः नास्तिचेदपि सहित्येऽस्मिन् विद्यमानाः प्रभावोत्पादकाः बहवः कृतयः अस्मिन् युगे एव लिखिताः इति अस्य कालस्य महत्वं भवति। आधुनिकेऽस्मिन् युगे व्यक्तिगताक्षेपस्यापेक्षया सामूहिकपरिस्थिते उपरि तथा इतरेषां विषयाणां उपरि च अधिकतया लिखिताः। एवं प्रकारेण आङ्ग्लसाहित्ये पद्यान्तर्गताः रचना प्रक्रियाः विस्तृतया विचारिताः।

**२.२. गद्यम्** (Prose)

अलङ्काररहितम्, छन्दसारहितम् लिखितरूपेणविद्यमानमेका प्रक्रिया भवति गद्यम्। तच्च गद्यं बहुविधम्। यथा –

**२.२.१. उपन्यासः** (Eassay) –

एतावता निर्दिष्टरुपेण अस्य निर्वचनं केनाऽपि न प्रदत्तम्। डा.जान्सन् महोदयानां अभिप्रायेण **उपन्यासः एकस्य मनुष्यस्य अव्यवस्थितरुपेण विद्यमान मानसिक विचाराणां प्रयाणं भवति**। उपन्यासे विषयापेक्षया क्रमपद्धतिः अपेक्षिता। अस्य प्रतिपाद्यविषयः मानुषिकमनोव्यापारविभागोऽवा अथवा शास्त्रदर्शनचरित्रं वा विमर्शनात्मकविषयो वा भवितुं अर्हति। एतादृशाः उपन्यासाः प्रत्येकसाहित्यविभागे न अन्तर्भवति। चारित्रात्मकोपन्यासः अपूर्णचरित्रस्य चर्चां करोति। दार्शनिको–पन्यासः दार्शनिकग्रन्थानां विस्तृतचर्चा करोति। उपन्यासः तस्य बाह्यशरीरापेक्षया तल्लिखितमार्गाधारेण श्रेष्ठतां याति।

उपन्यासानां कर्तृकमूलत्वेन रोमन् लेखकौ सिजरो, सेनकौ मन्येते। तेषा–मुपन्यासाः अद्यत्वेऽपि गुरुत्वेन स्वीक्रियते। इङ्ग्लण्ड् देशं प्रति उपन्यासानामानयने फ्रान्सिस् बाकन् (२२ जानुवरि १५६१–९ अप्रिल् १६२६) महोदयानां योगदानं बहु विद्यते। परं ते मैकल् मोन्टैग्ने (२८ फिब्रवरी१५३३–१३ सेप्टम्बर् १५९२) महोदयानां परम्परा नानुवर्तिता।

एतेषां मतानुसारमुपन्यासः आमुखरहितः, साहित्येन अनावृत्तः, उद्रिक्तपदैः अनलङ्कृतः, सुनिश्चितघटनारहितः, यश्च संक्षिप्तरूपेण द्रुतवाक्यसहितः च भवति।

पुनस्थापनावधौ ड्रैडन् महोदयेन विमर्शनात्मकोपन्यासाः इति नूतनोपन्यासस्य आविष्कारः कृतः। तस्य विषयवस्तुः साहित्यिक विमर्शनमासीत्। तस्य उदाहरणं तेनैव लिखितः **Essay of Dramatic Poesy** यश्च वाकोवाक्यप्रकारे निर्मितम्

भवति। अष्टादशशताब्देः प्रारम्भकाले पत्रप्रवर्तनस्य (journalism) आगमनेन उपन्यासाः अधिकतया सामान्यजननयनपथमागतः। डेफोर्स् रिव्यू इति पत्रिका या वारिका द्वैवारिका पुनश्च त्रैवरिका आसीत् सा एव पत्रिका उपन्यासस्य प्रचुरप्रचारे साहाय्यं प्रदत्ता। अस्मिन्नेव काले ऐदम्प्राथम्येन उपन्यासाः सामूहिक उन्नत्यै उपयुक्ता।

नवदशशताब्देः प्रारम्भकाले कालानुसृतवार्तापत्रिका साहित्यसम्बन्ध–विषयाय विमर्शनात्मकविषयाय च सामान्येन अवलोकनम् (Review) इति नाम्ना यः प्रसिद्धः तस्मै स्थानमकल्पयत्। तस्य प्रधानविषयः साहित्यम् तथा विमर्शनं च आसीत् न तु सामूहिकं वा वैय्यक्तिकम्।

तस्मिन्नेवकाले अवलोकनात् भिन्ना मासिका समागता। या च सर्वविध–लघुलेखन सर्गशक्तीनां विमर्शनानां विज्ञानानां विनोदानां संकरमासीत्।

नवदशशताब्दौ बहवः लेखकाः स्वीयव्यक्तित्वप्रचाराय उपन्यासान् चकार।

आधुनिकेऽस्मिन् काले असंख्याकाः दिनपत्रिकासु वारपत्रिकासु, मासिकासु च परिमितरूपेणोपन्यासाः लभ्यन्ते। **लेख** शब्देन (Article) या व्यपदिश्यते सा उपन्यासस्यैव अभिवर्णितं भवति।

**२.२.२. आख्यायिका** (Novel) (दीर्घकथा)

आख्यायिकायाः बीजं मध्यकालीन भावात्मककाले (Medieval Romance) लभ्यते। इटालियन् "नोवेल्ला" (Novelle) इति शब्दात् निष्पन्नः आङ्ग्लशब्दः "नोवेल्" (Novel) इति। सञ्चारिणः गायकाः, वीरगाधा, इतिहासात् स्वीकृत प्रेम, साहसयुक्त असाधारण कथाः अस्य मूलं भवति। प्रशस्तात् श्लोकायुक्तपद्यकाव्यात् स्वीकृत प्रेमकथा भवति आख्यायिका।

प्रसिद्ध अमेरिकन् आख्यायिकाकारः आख्यायिकां **कोशनाट्यशाला** (Pocket theatre) इति आह। यथोऽहि तेषां अभिप्रायेण आख्यायिका नाटकार्थं ये ये घटकाः अपेक्षिताः तेषां अभावेऽपि प्रेक्षकान्, सहृयान् च रञ्जयितुं शक्नोति।

अस्यां आख्यायिकायां नाटकवत् कश्चन इतिवृत्तमवश्यं भवेत्। तथैव यानि पत्राणि सन्ति तानि स्वीयपरिचयः तथैव तेषामुद्देश्यं च स्वीय सम्भाषणेन बोधनीयानि। नाटककारः, अस्माभिः अर्थात् प्रेक्षकैः यानि वस्तूनि द्रष्टुं शक्यन्ते

तेषां वस्तूनां आश्रितः भवति। परं आख्यायिकाकारः न तद्वत्। सः रङ्गमञ्चे येषां विषयाणां प्रदर्शनं कर्तुं न शक्यते तादृशानामपि विषयाणां वर्णना स्वीयाख्यायिकायां दर्शयितुं प्रभवति।

अस्यां कथावस्तुः अरिष्टानां, समस्यानां सुघटितविवरणं न भवेत्। कथायाः आरम्भे आपत्सन्धिः भवेत्। शिष्टेच पुस्तके तस्याः कारणचित्रीकरणं च भवेत्। कथायाः अन्तिमपर्यन्तं क्षमया तस्य प्रतिपादनं भवेत्। आख्यायिकायां कर्त्रे सम्पूर्णस्वातन्त्र्यं भवति।

एलिजबेतन् युगे विद्यमानाः बहवः गद्यलेखकाः कल्पनायाः साहाय्येन दृश्यमान आख्यायिकायाः निर्माणं कृतवन्तः। यथा जोनाथन् स्फिफ्ट् महोदयैः विरचित **गलिवर्स् द्रावल्स्** (१७२६) इति आख्यायिका।

अष्टादशशताब्दायां साहित्यिकविकासः परिपक्वतां प्राप्य, तेन आख्यायिका आधुनिकरूपं सम्प्राप्ता। अष्टादशशताब्दौ रिचड् सन् महोदयेन यद्यपि आख्यायिका सुप्रतिष्ठिता तथाऽपि तस्याः अनुविकारः हेन्ड्रि फील्डिंग् स्मालेट् तथा स्टेरेन महोदयैः पूर्णरूपेण अभिवृद्धिपथमानीता।

एकोनविंशतितमशताब्दस्य प्रारम्भकाले आख्यायिका अभिवृद्धिं गता। सर् वाल्टर् स्काट् तथैव लार्ड् बैडन् महोदयाः ऐतिहासिकाख्यायिकायाः प्रारम्भः कृताः। सचित्रात्मककथायाः विवरणमेव तेषां प्रमुखमुद्देश्यमासीत्।

चार्ल्स् डिकेन्स् महोदयानामागमनेन आख्यायिका नूतनतां प्राप्ता। तैरेव ऐदम्प्राथम्येन संकीर्ण इतिवृत्तान् तथैव तिक्तानुभवान् च इतिवृत्तरूपेण स्वीकृताः। तेषां रचनायां हास्यं, शोकः, सहानुभूतिः इत्यादयः दृश्यन्ते। अस्मिन्नेव शताब्दे आख्यायिका नूतनदिशां प्राप्ता। राष्ट्रीयाख्यायिका तथैव सामूहिकाख्यायिका च चार्ल्स् डिकेन्स् तथैव बेंजमिन् महोदयैः अभ्यस्ता। द्वितीय प्रपञ्चयुद्धानन्तरं साहित्यकाराः आधुनिकविचारान् परित्यज्य पुनरेकवारं पूर्वविचारान् समाश्रिताः।

रोमान्टिक् युगविरुद्धमनोभावाः तथैव विक्टोरियन्युगविरुद्धमनोभावाः च आधुनि-कयुगकाव्याय प्रेरकशक्तिरभूत्। आख्यायिकायाः पुनरुद्धारणे समकालिकजीवनस्य उपरि तथैव याथार्थ्यस्य उपरि च विद्यमान दृष्टिपथः च साहाय्यमकरोत्।

**२.२.३. लघुकथा** (Short Stories) –

अत्याधुनिकी भवति लघुकथा । आङ्ग्लसाहित्ये नवीनमिदं विभागम् । **छासर्** काले (१३५०–१४००) गानरूपे केचन लघुकथाः आसन् । गद्यरूपभावाः आङ्ग्लसाहि–त्यस्य लोपत्वेन परिगण्यते स्म । अष्टादशशताब्दौ सदाचारज्ञानप्रदानाय स्टील् तथा अडिसन् महोदयो लघुकथां चितवन्तौ ।

इयं लघुकथा आख्यायिकायाः विभागः न । लघुकथा काल्पनिकतायुक्ता आसीत् । अस्याः कथावस्तुः परिमितमासीत् । वक्त्रा वक्तुं उद्युक्तान् विषयान् साक्षात् वक्तुमिदमुपकरोति । कथायामस्यां पदप्रयोगाः अल्पाः आसन् । आधुनिकेऽस्मिन् युगे इयं लघुकथा सर्वान् मोदयति । अस्यां भाषा अति सरला भवेत् । प्रतिपदमपि यथा सामान्यजनाः अवगच्छन्ति तथा भवेयुः ।

एषा लघुकथा बहुकालं यावत् लेखकान्, अध्येतॄन् च मोदयति इत्यस्मिन् विषये नास्ति सन्देहः ।

**२.२.४. जीवचरित्रम्** (Biography)

जीवचरित्रम् कलासृष्टिरूपेण समीपकालेव परुपुष्टिता । जीवचरित्रम् इति पदं **ड्रैडन** महोदयः प्रप्रथमतया उपयुक्तवन्तः । अस्य जीवचरित्रस्य स्वरूपमनिश्चितं भवति । बहुकालं यावत् बहूनां विषयाणां विशदरुपेण सञ्चयमेवासीत् जीवचरित्रम् ।

जीवचरित्रम् सामान्यचरित्रात् भिन्नं भवति । यतोहि तत् एकस्यैव व्यक्तेः जीवन सम्बन्धं भवति । जीवनचरित्रम् द्वयोः विषयोरुपरि आधारितं भवति । (१) जननम् (२) मरणम् च । अस्मिन् लोखकविषये एव वर्णना भवति न तु इतरेषां विषये । जीवचरित्रम् तस्य विषयस्य सम्पूर्णाध्ययनं करोति । लेखकस्य व्यक्तित्वस्य सफलतायाश्च प्रतिबिम्बं भवति इदम् ।

अत्र सर्वदा विषयस्य निजस्वरूपमेव दर्शनीयं, प्रशंसा वा दूषणो वा भवितुं नार्हति । केवलं विषयस्य प्रस्तावः एव भवेत् । पाठकस्य मनसि चिरस्थायिरुपेण लेखकस्य उपरि अभिमानं यथा भवति तथा लिखेत् ।

अस्य भागद्वयं द्रष्टुं शक्यते । शुद्धं अशुद्धं च ।

**२.२.४.१. शुद्धजीवनचरित्रम्** (Pure Biography)

शुद्धजीवनचरित्रम् पाठकेभ्यः विषयस्य बाह्य–आन्तरविकासविषये सम्पूर्णचित्रणं ददाति। बहवः विषयाः अवश्यं तं अशुद्धीकर्तुं प्रयत्नं कुर्वन्ति। तथाऽपि उत्तमविषयान् प्राधान्येन स्वीकृत्य अधमविषयान् गौणत्वेन स्वीकर्तव्यः।

**२.२.४.२. अशुद्धजीवनचरित्रम्** (Impure Biography)

जीवनचरित्रम् अशुद्धं भवितुं बहूनि करणानि भवन्ति। यदि लेखकः विषयस्य उपरि असहनं वा कोपो वा यदि दर्शयति तर्हि तत् अशुद्धजीवनचरित्रम् भवति। अतः जीवचरित्रकारः विषयस्य दूरेस्थित्वा परीक्षकरुपेण भवेत्। जीवनचरित्रम् कस्यापि सिद्धान्तस्य चित्रीकरणं न भवेत्। जीवनचरित्रकाव्यस्य नाशनं वा स्थितिर्वा तद्विषयस्य उपरि आधारितं भवेत्। न तु लेखकस्य। तच्च विषयः यथार्थं भवेत्, न तु सत्यस्य आच्छादनम्।

जीवनचरित्रलेखने यस्य जीवनचरित्रं लिख्यते तस्य जीवनचरित्रविषये सम्पूर्णतया ज्ञात्वा एव लिखेत्।

**२.२.५. आत्मकथा** (Auto Biography)

आत्मकथायां लेखकः स्वीयजीवनविषये, विजयानां विषये च लिखति। परन्तु लेखकः परिपूर्णतया तस्य जीवनविषये चर्चितुं न प्रभवति। यतोऽहि तस्य मरणात्पूर्वमेव अस्य परिसमाप्तिः भवति। अतः तस्य मरणविषये प्रस्तौतुं न पारयति लेखकः।

मनोवैज्ञानिकरीत्या यदि पश्यामः तर्हि लेखकः किमर्थं तद् पुस्तकं लिखितवानिति, तत्रोक्ताः विषयाः सर्वाः अपि सत्यं वा, लेखने तस्य निगूढप्रत्याशा का, अभीष्टं किं इति तथैव अभिलाषा का इत्यपि केनाऽपि वक्तुं न शक्यते।

यथा हेनि् वाड्र्वर्थ् लान्गफेल्लो महोदयैः उक्तं **आत्मकथा स्वानुभवः, जीवचरित्रम् स्वज्ञानं च भवति।**

**२.३. रूपकम्** (Drama)

आङ्ग्लकाव्यरचनाप्रक्रियासु तृतीयं प्रमुखं च भवति रूपकम्। स्वाभि- नयेन, सम्भाषणेन च मनुष्यव्यापारान् सम्पूर्णतया प्रेक्षकहृदये प्रेषयतीदं दृश्यश्रव्य- कला । सुकुमारकलास्वन्यतममिदं रूपकम्। **पूर्णक्रियाणामनुकरणं रूपकम्** इति अरिस्टाटिल् महोदयानामभिप्रायः।

ग्रीस् देशे रूपकस्य विकसितं रूपं प्रप्रथमतया आविष्कृतम् । प्राचीनग्रीस्देशे देवतायै बलिदानसमये आराधनापूर्वकं गानं कृत्वा तालात्मकरूपेण नाट्यं कुर्वन्तिस्म। कालान्तरे गानस्येकैकं भागं एकैकः पुरुषः तत् कथापात्रभावरूपादिकं धृत्वा अभिनयं कृतवन्तः। पश्चात् नियतेतिवृत्तचयनं, नियतरूपेण भावरूपादिकं च धृत्वा रूपकस्याविष्कारः कृतवन्तः।

## बिर्जाडिष् प्रसाद् महोदयानामभिप्रायेण रूपकभेदाः

बिर्जाडिष् प्रसाद् महोदयाः आधुनिककारः। एतेषां मतानुसारं रूपकभेदाः एते भवन्ति यथा-

१. **दुरन्तात्मकम्** (Tragedy)
२. **हास्यात्मकम्** (Comedy)
३. **उभयात्मकम्** (Tragicomedy)
४. **प्रहसनम्** (Farce)
५. **स्तोभजनकम्** (Melodrama)
६. **प्रच्छन्नवेषरूपकम्** (Masque)
७. **एकाङ्कनाटकम्** (The One Act Play)
८. **नाटकीयस्वयोक्तिः** (Dramatic Monologue)

**२.अ.१. दुरन्तात्मकम्** (Tragedy)

प्राचीनकाले रूपकस्य द्वौ भेदौ आस्ताम्। तेष्वन्यतमं भवति दुरन्तात्मकम्। जीवनस्य दुःखयुक्तान् विषयान् अत्रान्तर्भवति। अत्र कथापात्राणि दुःखात्मक- वातावरणंप्रति गन्तुमात्मानं सर्वदा प्रेरयति।

दुरन्तात्मककाव्यानि उन्नतकुलजातानाम्, उन्नतपदव्यां विद्यमानानां च पुरुषाणां विषये भवन्ति। यथा राजा,राजकुमारादयः। काव्येऽस्मिन्नभिनेता उन्नतपादरक्षां धृत्वा अभिनयं कुर्वन्ति। तस्याः पादरक्षायाः नाम भवति बस्किन् (Buskin) अथवा कोथर्नस् (Cothurnus)। उन्नतवंशजातः,उन्नतपदव्यां विद्यमानः इति दर्शयितुं तस्याः पादरक्षायाः उपयोगः कृतवन्तः।

अस्य रूपकस्य कथावस्तुः राज्ञः पतनं, उन्नतवंशस्य नाशः,उन्नतवंशजानां मरणमित्यादिकं भवितुमर्हन्ति।

**२.अ.२. हास्यात्मकम्** (Comedy)

हास्यात्मकरूपकाणि जीवनस्य सन्तोषयुक्तान् विषयानाधारीकृत्य लिखन्ति। अस्य रूपकस्य प्रधानलक्ष्यं दर्शकेषु हास्योत्पादनमेव भवति। अस्मिन् रूपके दुःखात्मकाः विषयाः भवन्ति। तथापि अन्ते सुखपर्यवसानं तथा हास्यमेव भवति। समाजे विद्यमानानामप्राधानमनुष्याणामुपरि अत्र हास्यं कुर्वन्ति। अस्मिन् कथापात्राणि लघुपादरक्षां धृत्वा अभिनयं कुर्वन्ति। आङ्गले अस्य नाम सोक् (Sock) इति भवति।

**२.अ.३. उभयात्मकम्** (Tragicomedy)

नाम्नैव ज्ञातुं शक्यते यत् अयं रूपकविभागः दुरन्तात्क-हास्यात्मकयुक्तं भवति इति। अयं पूर्णतया दुरन्तात्कं न भवति यतोहि हास्यकणिकाः अस्मिन् बहवः भवन्ति। अपि च अयं विभागः पूर्णतया हास्यात्मकमपि न भवति। नेपत्थे दुरन्तात्मकस्य भावः द्रष्टुं शक्यते।

अस्मिन् रूपके मुख्यकथापात्रमारम्भे दुरन्तं वा हास्यं वा व्यक्तीकरोति। अन्ते तत् विपरीततया कथावस्तुनः परिवर्तनं भवति। अर्थात् कथायाः आरम्भः हास्यात्मकः चेत् अन्ते दुःखात्मकं भवति तथैव आरम्भः दुरन्तात्मकः चेत् अन्ते हास्यात्मकः च भवति ।

**२.अ.४. प्रहसनम्** (Farce)

प्रहसनं हास्यात्मकरूपकस्य अतिरञ्जितरूपं भवति। निजजीवनेनसाकं नास्य कोपि सम्बन्धः विद्यते। अस्य लक्ष्यं केवलं हृदयस्पर्शी हास्यमेव। तदर्थं रूपकेऽस्मिन्

असन्दर्भ कथापात्राणां, सन्निवेशानां तथा सम्भाषणानां च प्रयोगः क्रियते। अस्मिन् व्यङ्ग्यं सजीवरूपेण भवति। अत्र कथापात्राणि मुक्तानि भवन्ति। तेषां न केपि नियमाः, परिमितयश्च भवन्ति।

अत्र मुख्यकथापात्राणि वञ्चनायाः प्रतिरूपाणि भवन्ति। एते सर्वदा कोपयुक्तभार्यायाः सकाशात्, भर्तुः सकाशात्, ऋणदातुः सकाशात् वा पलायिताः भवन्ति। कुत्रचित् नियमेन पीडिताः अपि भवन्ति एते। एते बहुमानितान् जनान् अति विमर्शनात्मकस्थानं प्रति नयन्ति। प्रहसनेषु विभ्रान्तिं वर्धयितुं प्रेमव्यवहाराणां वर्णनमपि क्रियन्ते। अन्ततो गत्वा न कस्यापि हानिर्भवति।

**२.अ.५. स्तोभजनकम्** (Melodrama)

दुरन्तात्मककाव्यस्य अवहेलितरूपं भवति स्तोभजनकम्। अत्र कथापात्राणि अपराधी,प्रतीकारबुद्धियुक्तानि,द्यूतक्रीडाप्रियाणि,इच्छारहितानि, बन्धुरहितानि च भवन्ति। अत्र प्रतिनायकः पराजयं प्राप्नोति, धर्मं जयति च।

**२.अ.६. प्रच्छन्नवेषरूपकम्** (Masque)

अयं रूपकमेदं विनोदं भवति। यत्र कथावस्तुः, कथापात्रं तथैव सम्भाषणं च अतीव कौतुकरूपेण चित्रीक्रियते। तथैव सङ्गीतविनोदेनानुबन्धितं च भवति। एतत् रूपकं सङ्गीतमिश्रितं, सौन्दर्ययुक्तं, नाट्ययुक्तं तथैव अद्भुत,पुराण,दृष्टान्त (Allegory) कथायुक्तं च भवति।

**२.अ.७. एकाङ्कनाटकम्** (The One Act Play)

एकाङ्कनाटकमादौ अतिनिगूढमसाधारणं च विषयमाश्रितमासीत्। तच्च अति सङ्क्षिप्तमासीत्। बहूनि लघुविषयाणि स्वीकृत्य एकस्मिन्नेवाङ्के दर्शयन्ति। अस्य रूपकस्य स्वीयनियमाः विद्यन्ते। अतेव बृहत् नाटकरचनासु पराजितः कर्ता एकाङ्कनाटकरचनायां शोभते।

कथाविषयः दुरन्तात्मकं हास्यात्मकं वा भवतु तत् कथापात्राधारेण तस्य सौन्दर्यं वर्धयति। यतोहि यः विषयः भवति सः अल्पेनेव कालेन सुष्टुप्रतिपादनीयं भवति। अयमेकाङ्कनाटकं रूपकप्रतिभायाः अतिश्रेष्ठतरं कल्पनं भवति। विषयः दुरन्तात्मको वा हास्यात्मको वा भवतु सम्पूर्णमपि विषयमेकस्मिन्नेवाङ्के प्रदर्शयन्ति। रूपकल्पनायां लालित्यं तत्क्षणप्रभावं च अस्य रूपकस्य विजये साहाय्यं भवति।

**२.अ.८. नाटकीयस्वयोक्तिः** (Dramatic Monologue)

नाटकीयस्वयोक्तिः एकं साहित्यरूपं भवति। अस्यां साहित्यसृष्टौ निशब्दान् श्रोतॄन् प्रति अभिनेता कथां श्रावयति। इदं तावत् नाटकीयभाषणसम्भवान् विना कथापात्रपरिचयमेव लक्षीकरोति। इदं साहित्यरूपं सम्भाषणपद्यसमन्वितं भवति। इदं तावत् नाटकीयसङ्केतैः विद्यमानमेकं काव्यात्मकसम्भाषणं भवति। अत्र प्रवक्ता यथार्थेन कविर्भवितुं नार्हति। तथापि तस्मात् अभिव्यज्यमानं सम्भाषणं सम्पूर्णमपि पद्यं सुष्टु अलङ्करोति।

साहित्यसृष्टावस्याभिनेता सदस्यान् प्रति सम्भाषते। परन्तु इतरैर्नावगम्यते। नेपथ्यस्थेन केनचित् पुरुषेण दीयमानस्सङ्केतैः इतरसदस्यास्तावत् तानि सम्भाषणा-न्यवगच्छन्ति। साहित्यरूपकस्य कर्तुः मनः इतरान् सम्यगवबोधयत्यभिनेतात्र।

## उपयुक्तग्रन्थसूची


१. **अमरकोशः** – अमरः, चौखम्बा सुरभारती प्रकाशनम् , वारणसी , २००६.

२. **नाट्यशास्त्रम्** – भरतमुनिः, परिमल् प्रकाशनम्, दहली, २००३.

३. **वक्रोक्तिजीवितम्** – कुन्तकः, चौखम्बा सुरभारती प्रकाशनम् , वारणसी , २००१.

३. **दशरूपकम्** – धनञ्जयः, चौखम्बा विद्याभवन्, वारणसि, २०१०.

४. **नाट्यदर्पणम्** – रामचन्द्रगुणचन्द्र, परिमल प्रकाशनम्, देहली, १९९४.

५. **काव्यानुशासनम्** – हेमचन्द्रः, मेहरचन्द लचमण्डास् प्रकाशनम्, देहली, १९८६.

६. **काव्यालङ्कारः** – भामहः, सुरभारती समितिः, हैदराबाद्, १९७९.

७. **साहित्यदर्पणम्** – विश्वनाथः, चौखम्बा विद्याभवन्, वाराणसि, २००७.

८. **प्रतापरुद्रियम्** – विद्यानाथः, कृष्णदास् अकादमी, वाराणसि, १९८१.

९. **काव्यप्रकाशः** – मम्मटः, कृष्णदास् अकादमी, वाराणसि, १९९७.

१०. **काव्यालङ्कारसूत्राणि** – वामनः, चौखम्बा सेस्कृत संस्थानम्, वारणसि, २००१.

११. **भरतकोशः** – मानवल्लि रामकृष्णकविः, तितिदे प्रकाशनम्, १९९९.

१२. **सरस्वतीकण्ठाभरणालङ्कारः** – भोजदेवः, काशी हिन्दू विश्वविद्यालयः, १९७९.

१३. **अलङ्कारसर्वस्वम्** – राजानक रुय्यकः, चौखम्बा सुरभारती प्रकाशनम्, २००१.

१४. **ध्वन्यालोकः** – आनन्दवर्धनाचार्यः, चौखम्बा विद्याभवन्, वाराणसि, २००९.

१५. **रसगङ्गाधरः** – जगन्नाथः, चौखम्बा विद्याभवन्, वाराणसि, २००५.

१६. **कुवलयानन्दम्** – अप्पय्यदीक्षितः, चौखम्बा विद्याभवन्, वाराणसि, २००५.

१७. **काव्यादर्शः** – दण्डि, पोट्टिश्रीरामुलु तेलुगुविश्वविद्यालयः, २०११.

१८. **अलङ्कारशास्त्रस्येतिहासः** –जगदीश चन्द्रमिश्रः, चौखम्बा सुरभारता,वाराणसि, १९९९.

१९. **संस्कृतसाहित्येतिहासः** – रामचन्द्रमिश्रः, चौखम्बा विद्याभवन्, वाराणसि, २००३.

२०. **काव्यशास्त्रविमर्शः** – कृष्णकुमारः, राष्ट्रियसंस्कृतसंस्थानम्, देहली, २००७.

२१. **संस्कृतसाहित्यचरित्रम्** – मुदिगेण्डि गोपाल,सुजाता रेड्डि, पोट्टिश्रीरामुलु तेलुगु विश्वविद्यालयः, हेदराबाद्, २००७.

२२. **अलङ्कारसङ्ग्रहः** – अमृतानन्दयोगि, ति ति दे, तिरुपतिः, १९८४.

२३. **काव्यालङ्कारकङ्ग्रहः** – रामराजभूषणः, चौखम्बा विद्याभवन्, वाराणसि, २००३.

२४. **Survey of Sanskrit Literature** - C Kunhan Raja, BVB Mumbai, 1962.

२५. **A Hiatory Of English Literature** - Satish Kumar & Anupama Bansal, Lak-shminarayan Agarwal, Agra, 2000.

२६. **Oxford Dictionary** - Oxford University Press, Oxford, 2008.

२७. **Dictionary Of Literary Terms** - Chris Baldick, Oxford University Press, Oxford, 2008.

२८. **A Handbook Of British History** - K M Abraham, University Of Calicut, 1985.

२९. **English Literature its history and its significance for the life of English speaking world** - William J Long, AITBS publishers, INDIA, 2003.

३०. **Theory of Drama -** Dr. RN Rai, Classical Publishing Company, Delhi, 1992.

३१. **A background to the study of English Literature** - B. Prasad, Macmillan publishers, INDIA, 2009.

३२. **Essays in criticism -** Dr. Raghukul Tilak, Rama brothers publications, Delhi, 2000.

३३. **History and principles of Literary criticism** - Dr. Raghukul Tilak, Rama brothers publications, Delhi, 2009.

३४. **Indian writings in English** - K R Srinivasa Iyengar, Sterling publishers, New Delhi, 2008.

३५. **A glossary of literary terms** - M H Abrams, Macmillan publishers, New Delhi, 2004.

३६. **Sanskrit-English dictionary** - Monier Williams, Motilal Benarasidas publishers, New Delhi, 2002.

३७. **V S Apte Sanskrit-English dictionary** - Monier Williams, Motilal Benarasidas publishers, New Delhi, 2002.

३७. **An Introduction To English Criticism** - B. Prasad, Trinity Press Publications, New Delhi, 2009.

३८. **The Poetics -** S. H. Butcher, London Macmillan, 1895.

